# वैयाकरणसिद्धान्तकौमुदी



## बालमनोरमा-तत्त्वबोधिनी-शेखर-
## सुबोधिनी-चन्द्रकला-समलङ्कृता
### ( कृदन्तप्रभृति समाप्तिपर्यन्ता )




म० म० पं० गिरिधरशर्मा चतुर्वेदः ।
म०म० पं० परमेश्वरानन्दशर्मा विद्याभास्करः ।

॥ श्रीः ॥



श्रीमद्भट्टोजिदीक्षितविरचिता

# वैयाकरणसिद्धान्तकौमुदी

(कृदन्तप्रभृति समाप्तिपर्यन्ता)

श्रीमद्वासुदेवदीक्षितप्रणीतया बालमनोरमाख्यव्याख्यया
श्रीमज्ज्ञानेन्द्रसरस्वतीविरचितया तत्त्वबोधिन्याख्य-
व्याख्यया च सनाथिता,

शेखर-सुबोधिनीसुशोभितस्वरवैदिकीप्रकरणा तथा भैरवी-
चन्द्रकलासमलङ्कृतलिंगानुशासना

—०००—

भूतपूर्वजयपुरराजकीयसंस्कृतकालेजाध्यक्षेण महामहोपाध्यायव्याकरणाचार्य-
न्यायशास्त्र्याद्यनेकविरुदभाजा चतुर्वेदोपाह्वश्रीमद्गिरिधरशर्मणा
तदन्तेवासि-जालन्धरस्थ राजकीय-ओरियन्टलकालेजाध्यापकविद्या-
भास्कर-ऋषिकुलस्नातक-महामहोपाध्यायश्रीपरमेश्वरानन्द-
शर्मणा च संशोध्य सम्पादिता।

सा चेयं

काशीस्थ-हिन्दी-संस्कृतपुस्तकालयाध्यक्षैः

**मोतीलाल बनारसीदास**

इत्येतैः स्वीये "नवभारत" मुद्रणालये सम्मुद्र्य

प्रकाशिता

द्वितीयावृत्तिः ] १९५१ [ मूल्यम् ४)

# वैयाकरणसिद्धान्तकौमुद्याः

## उत्तरार्धे

### कृदन्ते कृत्यप्रकरणम् ॥ ६५ ॥

२८२९ धातोः । (३-१-९१) आ तृतीयसमाप्तेरधिकारोऽयम् ।

अथ कृदन्तप्रक्रिया निरूप्यन्ते । तदेवं 'प्रत्यया अथ कथ्यन्ते तृतीयाध्याय-गोचराः' इति प्रतिज्ञातेषु तृतीयाध्यायस्थप्रत्ययेषु प्रथमपादे 'प्रत्ययः परश्च' इत्या-रभ्य 'कुषिरञ्जोः प्राचां श्यन्-' इत्यन्तैः सूत्रैर्विहिताः कतिचित्प्रत्यया निरूपिताः । अथ तदुत्तरसूत्रविहितान् निरूपयितुमुपक्रमते धातोः । आ तृतीयेति । आ

समस्तजगतामीशौ जगदानन्दकारकौ ।
जगतीजनकौ वन्दे पार्वतीपरमेश्वरौ ॥

'कृदतिङ्' इति तिङ्भिन्नप्रत्ययस्य कृत्संज्ञाकरणात् कृतां तिङ्ज्ञानाधीनज्ञान-त्वात्तिङ्निरूपणानन्तरमेव कृतां निरूपणमुचितमिति तिङो निरूप्य कृतो निरूपयितु-माह धातोरिति । ननु तिङ्निरूपणात्प्रागेव 'स्पृशोऽनुदके क्विन्' 'ऋत्विग्-दधृग्-' इत्यादिना क्विन्नादिनिरूपणं कृतमिति कथमियं भवदुक्तसंगतिः सगच्छत इति चेत् । अत्राहुः—क्विन्नादिनिरूपणस्य तत्र प्रासङ्गिकत्वात् प्राधान्येन च कृतामत्रैव निरूपणान्नोक्तशङ्कावकाश इति । यद्यपि 'धातोरेकाचो हलादेः-' इति सूत्राद्धातोरित्य-नुवर्तत एव तथापि आर्धधातुकसंज्ञाया आश्रितशब्दव्यापारत्वलाभाय पुनर्धातोरिति ग्रहणं कृतम् । अन्यथा 'आर्धधातुकं शेषः' इत्यनेन तिङ्शिद्भिन्नस्य धातोर्विहित-प्रत्ययमात्रस्यार्धधातुकसंज्ञायां लूभ्यां पूभ्यामित्यादाविड्गुणौ स्यातां धातोर्विहितत्वेन भ्यामादेरार्धधातुकत्वात्, पुनर्धातुग्रहणे कृते तु तव्यत्तव्यादय इव धातोरित्येवम-विधानाद् भ्यामादेरार्धधातुकत्वं नेति दिक् । 'प्राग्लादेशाद्धात्वधिकारः' इति पक्षोऽ-युक्त इत्याशयेनाह आ तृतीयसमाप्तेरिति । तृतीयाध्यायसमाप्तिपर्यन्तमित्यर्थः । प्राग्लादेशादिति पक्षे तु 'तिङ्शित्सार्वधातुकम्' इत्यत्र धातोरित्यधिकाराभावात् शित्प्रत्ययमात्रस्य सार्वधातुकत्वेन शसोऽपि सार्वधातुकत्वे 'सार्वधातुकमपित्' इति ङित्वे च हरीनित्यादौ 'घेर्ङिति' इति गुणः स्यादिति ज्ञेयम् । स्यादेतत्—धातोर्लकारे सति तस्मिन् परतो नित्यत्वात्करिष्यतीत्यादौ प्रथमं स्यप्रत्ययप्रवृत्तौ तिबाद्यप्रसङ्गः, यत्र तु तिबाद्याश्रयो विकरणस्तत्रैव व्यवधानाभावाद्भवतीत्यादौ तिबादयः स्युरिति चेत् ।

'तत्रोपपदं सप्तमीस्थम्' (सू. ७८१) । 'कृदतिङ्' (सू. ३७४) । २८३०
वाऽसरूपोऽस्त्रियाम् । (३-१-९४) परिभाषेयम् । अस्मिन्धात्वधि

तृतीयाध्यायपरिसमाप्तेरित्यर्थः । एतच्च भाष्ये स्पष्टम् । तत्रोपपदं सप्तमीस्थ
इति । कृदतिङ् इति । व्याख्यातं प्राक् । वाऽसरूपोऽस्त्रियाम्
असरूप इति छेदः । परिभाषेयमिति । अधिकारत्वे स्वरितत्वकल्पनागौरवा
दिति भावः । असरूप इति लिङ्गनिर्देशः । यत्र असरूपप्रत्ययो विधास्यते त
वेत्युपतिष्ठते । वेत्यतः प्राग् बाधक इति शेषः । असरूपो वा बाधको भवती
यावत् । कस्य बाधको वेत्याकाङ्क्षायाम् उत्सर्गस्येत्यर्थाल्लभ्यते । फलितमा
अस्मिन् धात्वधिकारे इत्यादिना । स्त्रीशब्दः स्वर्यते, तदाह स्त्र्यधि

मवम्, 'विकरणेभ्यो नियमो बलीयान्' इति स्वीकारात् । अथवा विहितविशेषण
श्रयणेन धातोर्विहितस्य लस्येति व्याख्यानादिष्टसिद्धिः । नन्वेवं विहितविशेषणाश्रय
'विद्‌लृ लाभे' इत्यस्माद्धातोर्विहितस्य लटः शविकरणव्यवायेऽपि 'विदो लटो वा
इति णलादयः स्युरिति चेत् । अत्र हरदत्तः—धातुनाऽत्र विहितं विशेष्यते विदिन
त्वानन्तर्यमिति । तथा चायमर्थः संपद्यते—धातोर्विहितस्य विदोऽनन्तरस्य लट
णलादय इत्यभ्युपगमाद् वेत्तेरेव विहितस्य लटो णलादयो भवन्ति न तु विन्दतेर्ल
इति दिक् । विधेयानिर्देशात्स्वरितत्वाच्चाधिकारसूत्रमिदमित्याह अधिकारोऽय
मिति । तत्रोपपदमित्यादि । एतेन कृत्संज्ञोपपदसंज्ञयोरिह विधानसौष्ठवा
द्वितीयो धात्वधिकार आवश्यक इति ध्वनितम् । अयं भावः यदि द्वितीयधात्व
धिकारो न स्यात्तदा पूर्वधात्वधिकारेऽपि कृदुपपदसंज्ञे स्याताम् । इष्टापत्तौ तु सप्तमी
निर्दिष्टमात्रस्योपपदत्वेन 'च्लि लुङि' इत्यादौ लुङन्ते उपपदे च्लिरित्येवमनिष्टोऽ
प्रसज्येत । तिङ्भिन्नधात्वधिकारप्रत्ययस्य कृत्संज्ञायां करिष्यतीत्यादौ स्यप्रत्ययस
कृत्त्वेन 'कृत्तद्धित—' इति प्रातिपदिकत्वादौत्सर्गिकमेकवचनमिति सर्वसंमतत्वेन सुप्रत्यय
प्रसङ्गाच्च, तस्मादधिकारविशेषे अनयोः संज्ञयोर्विधानार्थमयमधिकार इति । वास
रूपोऽस्त्रियाम् । अपवादेन नित्यं बाधे प्राप्ते क्वचिदुत्सर्गस्यापि प्रवृत्त्यर्थमि
सूत्रम् । अतएव 'अचो यत्' 'ऋहलोर्ण्यत्' इत्याद्यपवादविषये तव्यदादयोऽपि प्र
ज्यन्ते—भव्यम्, भवितव्यम् । कार्यम्, कर्तव्यम् करणीयम् । वाच्यम्, वक्तव्यमि
त्यादि । परिभाषेति । अधिकारसूत्रमिति स्वीकृते तु स्त्र्यधिकारेण विच्छेदाद्वा
सरूपसूत्राप्रवृत्त्या आसित्वा भुङ्क्ते, आस्यते भोक्तुमित्यादिरूपाणि न सिध्यन्ति ।
हि भोजनार्थत्वादासनस्य पूर्वकालता गम्यते, क्त्वाप्रत्ययश्च तुमर्थाधिकाराद्भावे भव
लकारोऽपि तत्रैवेति समानविषयत्वादुभयोर्बाध्यबाधकभावः स्यात् । किं च वर्णात्का
इत्युत्सर्गः, स च 'रादिफः' इत्यनेन बाध्येत । न चेष्टापत्तिः, 'रकारादीनि नामा
शृण्वतो मम पार्वति' इत्यादिप्रयोगविरोधात् । अमुमेवार्थं मनसि निधाय हरदत्त
दिभिः परिभाषेयमित्युक्तम् । एतेन 'शकि लिङ् च' इति ज्ञापकाद्वासरूपविधेरनित्य
त्वेन स्त्र्यधिकारदुत्तरेषु क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्तीति सिद्धान्तः संगच्छ
इति दिक् । 'वासरूप—' इत्यत्राऽसरूप इति छेदः । अन्यथा लाघवे विशेषाभा

कारेऽसरूपोऽपवादप्रत्यय उत्सर्गस्य बाधको वा स्यात्स्त्र्यधिकारोक्तं विना ।
२८३१ कृत्याः । (३-१-९५) अधिकारोऽयं ण्वुलः प्रक् । २८३२
कर्तरि कृत् (३-४-६७) कृत्प्रत्ययः कर्तरि स्यादिति प्राप्ते २८३३

कारोक्तं विनेति । 'स्त्रियां क्तिन्' इति वक्ष्यमाणस्त्र्यधिकारस्थमपवादं विनेत्यर्थः। स्त्र्यधिकारस्थस्तु असरूपः प्रत्यय उत्सर्गस्य नित्यमेव बाधक इति भावः । 'ण्वुल्तृचौ, इन्युत्सर्गः । 'इगुपधज्ञाप्रीकिरः कः' इत्यपवादः । तद्विषये ण्वुल्तृचावपि भवतः । विक्षिपः । विक्षेपकः । विक्षेप्ता । असरूप इति किम्, 'कर्मण्यण्' इत्युत्सर्गः । 'अतोऽनुपसर्गे कः' इत्यपवादः । स तु सरूपत्वान्नित्यं बाधक एव । गोदः । कम्बलदः । 'नानुबन्धकृतमसारूप्यम्' इति वचनाद् अनुबन्धो न सारूप्यप्रतिबन्धकः । अस्त्रियां किम्, 'स्त्रियां क्तिन्' इत्युत्सर्गः । 'अ प्रत्ययात्' इति प्रत्ययान्ताद्विहितः अकारप्रत्ययः तस्य अपवादः । स बाधक एव भवति । चिकीर्षा । व्यावक्रोशी व्याकृष्टिः इत्यत्र तु 'कर्मव्यतिहारे णच स्त्रियाम्' इति णच् क्तिनो बाधको वा भवत्येव। अस्त्रियामिति निषेधस्तु नास्ति, तस्य णचः 'स्त्रियाम्' इत्यधिकारोक्तत्वाभावात् । कृत्याः । कृत्यसंज्ञका इत्यर्थः । ततश्च प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च, अर्हे कृत्यतृचश्च, शकि लिङ च' इत्यादिषु प्रवर्तते । ण्वुलः प्रागिति । 'ण्वुल्तृचौ' इत्यतः प्रागित्यर्थः । एतच्च भाष्ये स्पष्टम् । कर्तरि कृत् । अर्थनिदशोऽयम् । इति प्राप्ते इति । वक्ष्यमाणतव्यदादिप्रत्ययानां कृत्संज्ञकत्वात्तेषां कर्तरि प्राप्तावि-

नासंदेहाय सरूपो वेति ब्रूयादित्याशयेनाह असरूप इति । असरूप इति किम्, 'कर्मण्यण्, इत्युत्सर्गः । 'आतोऽनुपसर्गे कः' इत्यपवादः। स तूत्सर्गस्य नित्यं बाधको यथा स्यात् । गोदः। कम्बलदः । न च क्तेऽप्यसरूपग्रहणे अण्कयोरप्यसरूपत्वान्नेष्टसिद्धिरिति वाच्यम्, 'नानुबन्धकृतमसारूप्यम् इति सिद्धान्तात् । अस्त्रियामित्यत्र स्त्रीशब्दः स्वर्यते स्वरितेन चाधिकारावगतिरित्याशयेनाह स्त्र्यधिकारोक्तं विनेति । तेन 'स्त्रियां क्तिन्' इत्युत्सर्गम् 'अप्रत्ययात्' इत्यपवादो नित्यं बाधते । चिकीर्षा । जिहीर्षा । नन्वस्त्रियामित्यत्र स्त्रीशब्दस्य स्वरितत्वं प्रतिज्ञाय स्वरितेनाधिकारावगतिरित्यादिव्याख्यां विहाय स्त्रियामभिधेयायां वासरूपविधिर्नेति स्त्रियामित्येवं शब्दमुच्चार्य विहिते वासरूपविधिर्नेति वा व्याख्यायतामिति चेत् । अत्राहुः—स्त्रियां वाच्यायामिति पक्षे लव्या लवितव्येति यतो विषये तव्यो न स्यात्, द्वयोरपि इह स्त्रीवाचकत्वात् । स्त्रियामिति शब्दोच्चारणपक्षे तु व्यावक्रोशी व्यावकृष्टिरिति कर्मव्यतिहारे णचो विषये क्तिन्न स्यात् । द्वयोरपि स्त्रियामित्युच्चार्य विधानात् । ततश्च स्त्र्यधिकारोक्तं विनेति व्याख्यैव ज्यायसीति दिक् । कृत्याः । अत्र प्रत्यय इत्यादिवत्कृत्य त्यधिकारेणापीष्टसिद्धेर्बहुवचनमनुक्तप्रत्ययसमुच्चयार्थम्.तेन केलिमरादयो ज्ञापकसिद्धा इति नोपसंख्येया इत्याहुः । ण्वुलः प्रागिति । 'ण्वुल्तृचौ' इत्यतः प्रागित्यर्थः । 'रोगाख्यायां ण्वुल बहुलम्' इति नावधिः, प्रत्यासत्तिन्यायात् । अवधिविशेषे ज्ञापकं तु 'अर्हे कृत्यतृचश्च' इत्यत्र कृत्यात्पृथक् तृचो ग्रहणमेव । न चैवं तृचोऽकृत्यत्वेपि ण्वुलः कृत्यत्वं दुर्वारं स्यात्, इष्टापत्तौ तु 'तयोरेव—' इति भावकर्मणोरेव ण्वुल् स्यान्न तु

तयोरेव कृत्यक्तखलर्थाः । (३-४-७०) एते भावकर्मणोरेव स्युः । २८३४ तव्यत्तव्यानीयरः । (३-१-९६) धातोरेते प्रत्ययाः स्युः । तकाररेफौ स्वरार्थौ । एधितव्यम् एधनीयं त्वया । भावे औत्सर्गिकमेकवचनं क्लीबत्वं च । चेतव्यश्चयनीयो वा धर्मस्त्वया । 'वसेस्तव्यत्कर्तरि णिच्च' (वा. १९२०) । वसतीति वास्तव्यः 'केलिमर उपसंख्यानम्' (वा. १९१९) । पचेलिमा माषाः, पक्तव्याः । भिदेलिमाः सरलाः, भेत्तव्याः । कर्मणि प्रत्ययः । वृत्तिकारस्तु 'कर्मकर्तरि चायमिष्यते' इत्याह । तद्भाष्यविरुद्धम् । २८३५ कृत्यचः । ( ८-४-२९ ) उपसर्गस्थान्निमित्तात्परस्याच उत्तरस्य कृत्स्थस्य

---

त्यर्थः । तयोरेव कृत्यक्तखलर्थाः । 'लः कर्मणि च भावे च-' इति सूत्रोपात्ते भावकर्मणी तच्छब्देन परामृश्येते, तदाह एते भावकर्मणोरेवेति । न तु कर्त्तरीति भावः । वैशेषिकत्वादेव सिद्धे एवकारस्तु तव्यदादीनां कृत्संज्ञकतया प्राप्तकर्त्रर्थकत्वस्याभावमनुवदन् कृत्यसंज्ञया वैशेषिक्या कृत्संज्ञाया अबाधं गमयति । तव्यत्तव्यानीयरः । तव्यत् तव्य अनीयर् एषां द्वन्द्वः । प्रत्ययाः स्युरिति । ते कृत्संज्ञकाः कृत्यसंज्ञकाश्च इत्यपि ज्ञेयम् । स्वरार्थाविति । 'तित्स्वरितम्' इति 'उपोत्तमं रिति' इति च स्वरविशेषार्थावित्यर्थः । निरनुबन्धकस्य तु तव्यस्य प्रत्ययस्वरेण आद्युदात्तत्वमेवेति बोध्यम् । भावे उदाहरति एधितव्यमिति । त्वत्कर्तृका एधनक्रियेत्यर्थः । ननु 'लः कर्मणि च-' इत्यत्र असत्त्वभूतस्यैव भावस्य ग्रहणम्, तिङ्वाच्यभावनाया असत्त्वरूपताया उक्तत्वात् । ततश्च तस्य भावस्य असत्त्वरूपस्यात्र 'तयोरेव कृत्य-' इति तच्छब्देन परामर्शात्तव्यदादीनामसत्त्ववाचितया लिङ्गसंख्यान्वयोऽनुपपन्न इत्यत आह भावे औत्सर्गिकमेकवचनमिति । 'एकवचनम्, द्विबहुषु द्विबहुवचने' इति सूत्रपाठमभ्युपगम्य द्वित्वबहुत्वाभावे एकवचनमिति भाष्यसिद्धान्तादिति भावः । क्लीबत्वं चेति । 'एकश्रुतिः स्वरसर्वनाम, लिङ्गसर्वनाम नपुंसकम्' इति 'दाण्डिनायन-' इति सूत्रस्थभाष्यादिति भावः । कर्मण्युदाहरति चेतव्य इति । 'वसेस्तव्यत् कर्तरि णिच्च' इति वार्तिकम् । वास्तव्य इति । वस्तेत्यर्थः । णित्त्वादुपधावृद्धिः । केलिमर इति । धातोरित्येव । भावकर्मणोरेवेदम् । केलिमरि ककाररेफावितौ । भिदेलिमा इति । कित्त्वान्नोपधागुणः । सरला वृक्षविशेषाः । तद्भाष्येति । भाष्ये भिदेलिमा इत्युदाहृत्य भेत्तव्या इत्येव विवरणादिति भावः । कृत्यचः । 'रषाभ्यां नो णः' इत्यनुवर्तते । 'उपसर्गादनोत्परः' इत्यत उपसर्गादिति च । उपसर्गस्थादिति विवक्षितम् । कृतीत्यनन्तरं विद्यमानस्येति

---

कर्तरीति वाच्यम्, भाष्ये एव ण्वुलः कृत्यत्वमाशङ्क्य योगापेक्षं ज्ञापकमिति सिद्धान्तितत्वात् । वृत्तिकारस्तु सूत्रे प्राग् ण्वुल इति प्रचिक्षेप । तयोरेव । तच्छब्देन भावकर्मणी परामृश्येते एवकारस्तु कर्तृयोगव्यवच्छेदार्थस्तदाह भावकर्मणोरेवेति । यद्यप्येतत्तक्रकौण्डिन्यन्यायेनैव लभ्यते, तथापि स्पष्टप्रतित्त्यर्थमेवकार इत्येके । तन्न्यायस्यानित्यत्वज्ञापनार्थमित्यन्ये । स्वरार्थाविति । तकारः 'तित्स्वरितम्' इति स्वरितत्वार्थः । रेफस्तु 'उपोत्तमं रिति' इति मध्योदात्तार्थः । कृत्यचः ।

नस्य णत्वं स्यात् । प्रयाणीयम् । अचः किम्-प्रमग्नः । 'निर्विण्णस्योपसंख्यानम्' ( वा. ५००४ ) । अचः परत्वाभावादप्राप्ते वचनम् । परस्य णत्वम्, पूर्वस्य ष्टुत्वम्, निर्विण्णः । २८३६ णेर्विभाषा । ( ८-४-३० ) उपसर्गस्थान्निमित्तात्परस्य ण्यन्ताद्विहितो यः कृत्तत्स्थस्य नस्य णो वा स्यात् । प्रयापणीयम्, प्रयापनीयम् । विहितविशेषणं किम्-यका व्यवधाने यथा स्यात् प्रयाप्यमाणं पश्य । 'णत्वे दुर उपसर्गत्वं न' इत्युक्तम्, दुर्यानम्,

---

शेषः । अच इति पञ्चमी, तदाह **उपसर्गस्थादिति** । असमानपदत्वादप्राप्तौ वचनम् । 'अट्कुप्वाङ्नुम् व्यवायेऽपि' इत्यनुवर्तते, तदाह **प्रयाणीयमिति** । **निर्विण्णस्येति** । नस्य ण इत्युपसंख्यानमित्यर्थः । **अचः परत्वाभावादिति** । विदेः क्तप्रत्यये 'रदाभ्याम्—' इति दकारादुत्तरस्य तकारस्य पूर्वदस्य च नत्वे निर्विन् न इति स्थिते नकारस्य अचः परत्वाभावात् 'कृत्यचः' इति अप्राप्ते णत्वे इदं णत्ववचनमित्यर्थः । नकारेण व्यवधानाच्च णत्वस्याप्राप्तिर्बोध्या । **पूर्वस्येति** । नस्य णत्वे ष्टुत्वेन णत्वमित्यर्थः । तथा च द्विणकारकं रूपम् । **णेर्विभाषा** । 'कृत्यचः' इत्यनुवर्तते । 'रषाभ्यां नो णः' इति च । णेरिति कृतो विहितविशेषणम्, तदाह **उपसर्गस्थादित्यादिना** । **प्रयापणीयमिति** । याधातोर्णौ पुकि यापि इत्यस्माद् ण्यन्तादनीयरि णेर्लोपे अनेन णत्वविकल्पः । **यकेति** । यापि इत्यस्माद् ण्यन्तात् कर्मणि लटः शानचि 'आने मुक्' इति मुगागमे यकि णिलोपे प्रयाप्यमाणशब्दे णत्वविकल्प इष्यते । णेः परो यः कृत् तत्स्थस्य णत्वविकल्प इत्युक्तौ तु कृतः शानचो यका व्यवहितत्वेन णिचः परत्वाभावात् तत्स्थस्य नस्य णत्वविकल्पो न स्यात् । तदर्थं णेरिति विहितविशेषणमाश्रितमित्यर्थः । भाष्ये तु ण्यन्तात्परो यः कृत् इत्यंशेऽप्यट्कुप्वाङ्नुमित्याद्यनुवर्त्य यकारव्यवधानेऽपि णत्वविकल्पः समर्थितः । **णत्वे दुर इति** । 'दुरः षत्वणयोरुपसर्गत्वप्रतिषेधो वक्तव्यः' इत्यनेनेति भावः । ततश्च दुर उपसर्गत्वाभावात् ततः परे कृत्स्थनकारे सूत्रद्वयमपि न प्रवर्तते

---

उपसर्गादित्यनुवर्तते रषाभ्यामिति च । तत्र तात्स्थ्यात्ताच्छब्द्यमित्याह **उपसर्गस्थादिति** । **कृत्स्थस्य नस्येति** । अच उत्तरस्येत्यस्य कृतो विशेषणत्वे तु प्रयापणमित्यादौ न स्यादिति भावः । **प्रमग्न इति** । 'टुमस्जो शुद्धौ' 'ओदितश्च' इति निष्ठानत्वम् तस्यासिद्धत्वात् 'स्कोः—' इति सलोपे 'चोः कुः' । **निर्विण्णस्येति** । विदेः क्तस्य 'रदाभ्याम्—' इति नत्वं पूर्वस्य दस्य च । **प्रायापणीयमिति** । या प्रापणे । णिचि 'अर्तिह्री—' इति पुक् 'णेरनिटि' इति णिलोपः । **प्रयाप्यमाणमिति** । यातेर्णिचि पुकि ण्यन्तस्य धातुत्वेन वर्तमाने कर्मणि लटि लटः शानच् तस्य शित्त्वेन 'तिङ्शित्—'इति सार्वधातुकत्वे 'सार्वधातुके यक्' इत्यनेन यकि कृते 'णेरनिटि' इति णिलोपे 'आने मुक्' इति मुगागमे णत्वे च सिध्यति रूपम् । विहितविशेषणाकरणे तु यका व्यवधानेन ण्यन्तात्परत्वाभावान्न सिध्यति । न चाड्व्यवायेऽपीति भविष्यतीति वाच्यम्, रषाभ्यां परस्य नस्येत्यंशे तस्मादिति निर्दिष्टपरिभाषया प्रापितस्याव्यवधानस्य रामाणामित्यादिसिद्धये व्यवायेऽपीति योगविभागेन

दुर्यापनम् । २८३७ **हलश्चेजुपधात्** । ( ८-४-३१ ) हलादेरिजुपधात्कृन्नस्याचः परस्य णो वा स्यात् । प्रकोपणीयम्, प्रकोपनीयम् । हलः किम्—प्रोहणीयम् । इजुपधात् किम्—प्रवपणीम् । २८३८ **इजादेः सनुमः** ( ८-४-३२ ) सनुमश्चेद्भवति तर्हि इजादेर्हलन्ताद्विहितो यः कृत्तत्स्थस्यैव प्रेङ्खणीयम् । इजादेः किम्—'मगि सर्पणे' प्रमङ्गनीयम् । नुम्ग्रहणमनुस्वारोपलक्षणार्थम् । 'अट्कुप्वाङ्—' ( सू. २९७ ) इति सूत्रेऽप्येवम् । तेनेह न—प्रेन्वनम् । इह तु स्यादेव । प्रोम्भणम् । २८३९ **वा निंसनिक्षनिन्दाम्** ।

---

इत्यभिप्रेत्य उदाहरति **दुर्यानं दुर्यापनमिति** । यातेर्ण्यन्ताद् ल्युटि णिलोपे दुर्यापनमिति रूपम् । **हलश्चेजुपधात्** । हलन्तादिति नार्थः, इजुपधस्य हलन्तत्वाव्यभिचारात् । किंतु हलादेरिति विवक्षितम् तदाह **हलादेरिजुपधादिति** । परस्येति शेषः । प्रोहणीयमित्यादिप्रत्युदाहरणे तु 'कृत्यचः' इति नित्यमेव णत्वम् । **इजादेः** । 'णेर्विभाषा' इति निवृत्तम् । 'कृत्यचः' इत्यनुवर्तते, 'हलश्चेजुपधात्' इत्यतो हल इति च । प्रकृतिविशेषणत्वात् तदन्तविधिः । तथा च सुनमो हलन्ताद् इजुपधात् परस्य कृन्नस्य णः स्यादिति लभ्यते । एवं च प्रेङ्खणीयमित्यादौ 'कृत्यचः' इत्येव सिद्धेरिदं नियमार्थमित्याह **सनुमश्चेदिति** । कृत्स्थस्यैवेत्यनन्तरं । णत्वमिति शेषः । **प्रेङ्खणीयमिति** । इखधातुरिदित्वात्सनुम् । ननु 'इवि प्रीणने' इति धातोर्ल्युटि तस्यानादेशे प्रेन्वनमित्यत्रापि णत्वं स्यात्, सनुमोऽस्य इजादित्वाद्धलन्तत्वाच्चेत्यत आह **नुम्ग्रहणमित्यादि** । अनुस्वारश्च सर्व एव गृह्यते, न तु नुम्स्थानिक एव, अविशेषात् । तदाह **इह त्विति** । **प्रोम्भणमिति** । इह

---

बाधे सति आदर्शेनेत्यादावतिप्रसङ्गे प्राप्ते आट्कुप्वाङित्यंशो नियमार्थः । आङ्ग्रहणं तु पदव्यवायेऽपीति निषेधं बाधितुमिति स्थितम् । 'णेर्विभाषा' इत्यत्र तु ण्यन्तकृतोरव्यधानस्यापेक्षा कथमङ्ग्रहणेन निवार्येति भावः । **हलश्च** । इजुपधस्य हलन्तत्वाव्यभिचाराद्धल इत्यनेन तदादित्वं लक्ष्यत इत्याह **हलादेरिति** । **प्रकोपणीयमिति** । कुप क्रोधे । **प्रोहणीयमिति** । ऊह वितर्के । अत्र 'कृत्यचः' इति नित्यमेव णत्वम् । एवं प्रवपणीयमित्यत्रापि । डुवप् बीजसंताने । **इजादेः सनुमः** । 'कृत्यचः' इत्येव सिद्धे नियमार्थमिदमित्याह **सनुमश्चेदित्यादि** । इह हल इत्यनुवृत्तं तदन्तपरं न तु तदादिपरम् । इजादेर्हलादित्वात्तदाह **हलन्तादिति** । **विहित इति** । यदि तु विहितविशेषणं न व्याख्यायेत तर्हि नियमार्थता न लभ्येत, णिजन्ताद्विहितस्यापि कृत्स्थनकारस्य णिलोपे कृते हलन्तात्परत्वेन 'णेर्विभाषा' इति विकल्पं बाधितुं विधेः सम्भवात् । इष्टापत्तौ तु अणिजन्तप्रकृतिकानीयर्प्रत्ययान्तं प्रेङ्खणीयमित्याद्युदाहरणं न स्यात्, किंतु णिजन्तप्रकृतिकमेवोदाहरणं स्यात् । किं च अस्य सूत्रस्य नियमार्थत्वाभावात्प्रमङ्गनीयमित्यत्र 'कृत्यचः' इत्यनेन णत्वं स्यात्, अतो विहितविशेषणमवश्यं स्वीकार्यमिति दिक् । नन्वेवमपि नियमार्थता न युज्यते, प्रेन्वनमित्यत्र विध्यर्थत्वसंभवात्, नुम्नकारेण व्यवधानात् 'कृत्यचः' इत्यस्याप्राप्तेरित्यत आह **नुम्ग्रहणमिति** । 'अट्कुप्वाङ्—' इति सूत्र इवात्रापि नुमानु-

(८-४-३३) एषां नस्य णो वा स्यात्कृति परे । प्रणिसितव्यम्, प्रनिसितव्यम् । २८४० न भाभूपूकमिगमिप्यायीवेपाम् । (८-४-३४) एभ्यः कृन्नस्य णो न । प्रभानीयम् । प्रभवनीयम् । 'पूञ एवेह ग्रहणमिष्यते' ( वा. ५०११ ) । पूङस्तु प्रपवणीयः सोमः । 'ण्यन्तभादीनामुपसंख्यानम्' ( वा. ५०१२ ) । प्रभापनीयम् । 'ख्शाञः शस्य यो वा' ( वा. १५८४ ) इत्युक्तं णत्वप्रकरणोपरि तद्बोध्यम् । यत्वस्यासिद्धत्वेन शकारव्यवधानान्न णत्वम् । प्रख्यानीयम् । २८४१ कृत्यल्युटो बहुलम् । ( ३-३-११३ ) स्नान्त्यनेन स्नानीयं चूर्णम् । दीयतेऽस्मै दानीयो विप्रः । २८४२ अचो यत् । ( ३-१-९७ ) अजन्ताद्धातोर्यत्स्यात् । चेयम् । जेयम् । अज्ग्रहणं शक्यमकर्तुम् । योगविभागोऽप्येवम् । तव्यदादिष्वेव यतोऽपि सुपठत्वात् । २८४३

---

उम्भधातुः स्वाभाविकानुस्वारवानेव, न तु नुम्स्थानिकानुस्वारवानिति भावः । वा निंस । 'कृत्यचः' कृतीत्यनुवृत्तम् । अच इति च निवृत्तम्, तदाह एषां नस्येति । न भाभू । प्रभानीयमिति । इह 'कृत्यचः' इति प्राप्तं णत्वं नेति भावः । णत्वप्रकरणोपरीति । इदं 'चक्षिङः ख्याञ्' इति सूत्रे भाष्ये स्पष्टम् । प्रख्यानीयमिति । इह यत्वस्यासिद्धतया शकारेण व्यवधानात् 'कृत्यचः' इति णत्वं नेति भावः । कृत्यल्युटो । याभ्यः प्रकृतिभ्यो येष्वर्थेषु विहिताः ततोऽन्यत्रापि स्युरित्यर्थः । स्नानीयमिति । करणे अनीयर् । दानीय इति । संप्रदाने अनीयर् । भाष्ये तु 'कृतो बहुलमिति वक्तव्यम्' इत्युक्त्वा पादाभ्यां ह्रियते पादहारकः । कर्मणि ण्वुल् । श्वोऽग्नीनाधास्यमानेन । अनद्यतने भविष्यति लृडित्युदाहृतम् । अचो यत् । शक्यमकर्तुमिति । 'ऋहलोर्ण्यत्' इति ऋहलन्ताद् विशिष्य ण्यतो विहितत्वेन हलन्तेभ्यो यत्प्रयस्याप्रवृत्तिरित्यर्थः । वासरूपविधिस्तु सरूपत्वान्न भवति । योगविभागोऽप्येवमिति । कर्तुमशक्य

---

स्वारो लक्ष्यत एति विध्यर्थत्वमिह न शङ्कनीयमिति भावः । प्रोम्भणमिति । उम्भ पूरण इत्यस्माद्भावे ल्युट् । वा निंस । 'कृत्यचः' इत्यतोऽनुवर्तनादाह कृति पर इति । ण्यन्तभादीनामिति । ण्यन्तस्य प्रकृत्यन्तरत्वादप्राप्ते वचनम् । 'हेरचङि' इति सूत्रे अचङीति पर्युदासेन प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणमिति ज्ञापनादेतत्सिद्धमिति केचिदाहुस्तद्रभसात्, ज्ञापनं तु कुत्वमात्रविषयकमिति भाष्यादौ सिद्धान्तितत्वात् । अचो यत् । धातोरिति वर्तते । अज्ग्रहणं च धातोर्विशेषण विशेषणेन तदन्तविधिस्तदाह अजन्तादिति । शक्यमकर्तुमिति । अत्र केचिदज्ग्रहणमजन्तभूतपूर्वादपि यथा स्यादित्येवमर्थमपेक्षितम् । तेन दित्स्यं धित्स्यमित्यत्र यति कृते 'यतोऽनावः' इत्याद्युदात्तत्वं सिध्यति, ण्यति कृते तु 'तित्स्वरितम्' इति प्रसज्येत । न च दित्स्यं धित्स्यमित्यत्र 'ऋहलोः—'इति ण्यतः प्रसक्तिरेव नास्तीति वाच्यम्, आर्धधातुकविवक्षायामेव अतो लोपे कृते हलन्तत्वेन तत्संभवादित्याहुः । तदापाततः, आर्धधातुके विवक्षिते यद्यतो लोपः स्यात्तदा हि संभवेत्, लोपस्तु आर्धधातुके पर एवोचितः । अन्यथा परनिमित्तत्वाभावेन स्थानिवत्त्वाभावे गणयतीत्या-

ईद्यति । (६—४—६५) यति परे आत ईत्स्यात् । गुणः, देयम् । ग्लेयम् 'तकिशसिचतियतिजनिभ्यो यद्वाच्यः' ( वा० १९२२ ) तक्यम् । शस्यम् चत्यम् । यत्यम् जन्यम् । जनेर्यद्विधिः स्वरार्थः, ण्यतापि रूपसिद्धेः । न च वृद्धिप्रसङ्गः 'जनिवध्योश्च' ( सू० २५१२ ) इति निषेधात् । 'हनो वा यद्वधश्च वक्तव्यः' ( वा० १९२३) । वध्यः । पक्षे वक्ष्यमाणो ण्यत्, घात्यः

२८४४ **पोरदुपधात्** । ( ३—१—९८ ) पवर्गान्तादुपधाद्यत्स्यात् । ण्यतो

---

इत्यर्थः । कुत इत्यत आह तव्यदादिष्वेवेति । तव्यत्तव्यानीयर्यंत इत्येकसूत्रत्वेनैव पठितुं शक्यत्वादित्यर्थः । ईद्यति । आत इति । 'आतो लोप इटि च' इत्यतस्तदनुवृत्तेरिति भावः । गुण इति । दाधातोः 'अचो यत्' इति यति आत ईत्त्वे 'सार्वधातुकार्धधातुकयोः' इति गुण इति भावः । ग्लेयमिति । 'ग्लै हर्षक्षये' इति धातोर्यति 'आदेचः—' इत्यात्त्वे ईत्त्वे गुण इति भावः । तकिशसीति । तकि, शसि, चति, यति, जनि एषां पञ्चानां द्वन्द्वः । इक निर्देशः । 'ऋहलोर्ण्यत्' इत्यस्यापवादः । 'तक हसने, शस् हिंसायां, चते याचने, यती प्रयत्ने, जनी प्रादुर्भावे' इति धातवः । अत्र सर्वत्र अकर्मकेभ्यो भावे प्रत्ययः । सकर्मकेभ्यस्तु कर्मण्यपीति विवेकः । ननु 'अर्हे कृत्यतृचश्च' इत्यर्हे यद्य जनेर्ण्यताऽपि जन्यमिति रूपसिद्धेः जनिग्रहणं व्यर्थमित्यत आह स्वरार्थ इति तु 'यतोऽनावः' इत्याद्युदात्तार्थ इत्यर्थः । ननु ण्यति उपधावृद्धिः स्यात्, अतस्त दभावार्थमिह जनेर्यद्विधिरस्त्वित्याशङ्क्य निराकरोति न च वृद्धिप्रसङ्ग इति कुत इत्यत आह जनिवध्योरिति । हनो वेति हनधातोर्यद्वा स्यात् । प्रकृते वधादेशश्चेत्यर्थः । पक्ष इति । यदभावपक्षे इत्यर्थः । घात्य इति । ण्यति 'हनस्तोऽचिण्णलोः' इति नस्य तः । कुत्वम् । उपधावृद्धिः । वधादेशस्तु यत्संनियोगशिष्टत्वान्नेति भावः । पोरदुपधात् । ननु शप्यं लभ्यमित्यत्र 'ऋहलोर्ण्यत्

---

दावुपधावृद्धिप्रसङ्गदिति भावः । सुपठत्वादिति । द्वये धातवोऽजन्ता हलन्ताश्च तत्र हलन्ताण्ण्यतं वक्ष्यतीति परिशेषादजन्तादेव यद्भविष्यतीति भावः । तकिश सीति । तक हसने । शसु हिंसायाम् । चते याचने । यत्तु केचिच्छंसीति सानुस्वा पठन्ति तदुपेक्ष्यम् । 'ईडवन्दवृशसदुहां ण्यतः' इति सूत्राविरोधेन शंसेर्ण्यंत एव स्वीकर्तव्यत्वात् । हनो वा यदिति । हन्तेर्वा यत्स्यात्, यत्संनियोगेन वधादेश नित्य एव । यद्यपि वधमर्हतीति वध्य इति 'शीर्षच्छेदाद्यच्च' इत्यतो यदित्यनुवर्तमाने 'दण्डादिभ्यः—' इति तद्धितेन यतापि सिध्यति तथाप्यसिवध्यो मुसलवध्य इति समासो न सिध्येत् । कृति पुनः 'कर्तृकरणे कृता—' इति सिध्यति । न चासिवधमर्ह तीति विग्रहे कृतसमासादेव तद्धितोऽस्त्विति वाच्यम्, दण्डादिषु केवलस्य वधश ब्दस्य पाठात्प्रत्ययविधौ तदन्तविधेश्च प्रतिषेधात्स्वरे भेदाच्च । असिवधशब्दाद्यति हि सति 'तित्स्वरितम्' इति स्वरितः प्रसज्येत । कृदन्तेन समासे तु कृदुत्तरपदप्रकृति-स्वरेण वध्यशब्द आद्युदात्तः । अतएव वध्यशब्देन तद्धितान्तेन सह सुप्सुपेति समासः इत्यपि न वाच्यम् । अन्तोदात्तत्वप्रसङ्गादिति दिक् । घात्य इति । 'हनस्तोऽ

पवादः । शप्यम् । लभ्यम् । 'नानुबन्धकृतमसारूप्यम्' । अतो न ण्यत् । तव्यदादयस्तु स्युरेव । २८४५ आङो यि । ( ७—१—६५ ) आङः परस्य लभेर्नुम्स्याद्यादौ प्रत्यये विवक्षिते । नुमि कृते अदुपधत्वाभावाद् ण्यदेव । आलम्भ्यो गौः । २८४६ उपात्प्रशंसायाम् । ( ७-१-६६ ) उपलम्भ्यः साधुः । स्तुतौ किम्-उपलब्धुं शक्य उपलभ्यः । २८४७ शकिसहोश्च ।

---

इति कदाचिद् ण्यदपि स्यात् । यत्ण्यतोरसारूप्येण 'वाऽसरूप—' इत्यस्य प्रवृत्तेरित्यत आह नानुबन्धकृतमसारूप्यमिति । वाऽसरूपसूत्रे भाष्ये स्थितमिदम् । अनुबन्धविनिर्मुक्तस्यैव असारूप्यं विवक्षितमित्यर्थः । प्रकृते च यत्ण्यतोरनुबन्धरहितयोः सारूप्याद् वासरूपविधेरप्रवृत्तेः शप्यमित्यादौ ण्यदपवादो यदेवेति भावः । आङो यि । 'इदितो नुम् धातोः' इत्यतो नुमिति 'लभेश्च' इत्यतो लभेरिति चानुवर्तते, तदाह आङः परस्येति । विवक्षिते इति । यीति विषयसप्तमीति भाष्ये स्पष्टम् । विवक्षिते इत्यस्य प्रयोजनमाह नुमि कृते इति । यत्प्रत्यये विवक्षिते तत्प्रवृत्तेः प्रागेव नुमि कृते अदुपधत्वाभावाद्यत्प्रत्ययस्याप्रवृत्तेर्ण्यदेवेत्यर्थः । यतिपरे नुमित्यर्थे तु अदुपधत्वाद् यदेव स्याद् न तु ण्यदिति भावः । आलम्भ्यो गौरिति । यद्यपि यत्ण्यतोर्न रूपभेदः, तथापि ण्यति कृते तित्स्वरितम् । इति स्वरितत्वम् । यति तु 'यतोऽनावः' इत्याद्युदात्तत्वमिति स्वरभेदः फलम् । उपात्प्रशंसायाम् । उपात्परस्य लभेर्नुम् स्याद् यादौ प्रत्यये विवक्षिते प्रशंसायां गम्यमानायामित्यर्थः । उपलम्भ्यः साधुरिति । समीपे प्राप्य इत्यर्थः । साधुशब्दात् प्रशंसा गम्यते । इहापि नुमि कृते अदुपधत्वाभावाद् ण्यदेव, स्वरे विशेषः पूर्ववत् । शकिसहोश्च ।

---

चिण्णलोः' इति तत्वम्, 'हो हन्तेः—' इति कुत्वम् । पोरदुपधात् । पोः किम्, वाक्यम् । अदुपधात्किम्, कोप्यम् । तपरकरणं किम्, आप्लृ व्याप्तौ, आप्यम् । नानुबन्धेति । अनुबन्धानामनवयवत्वात् तत्कृतमसारूप्यं नाश्रीयते । एकान्तत्वपक्षेऽपि 'ददातिदधात्योर्विभाषा' इति विभाषाग्रहणाल्लिङ्गान्नाश्रीयते । अन्यथा अनुबन्धकृतादसारूप्यादेव शविषये णो भविष्यतीति किं तेन विभाषाग्रहणेन । ततश्च पक्षद्वयेऽपि शप्यमित्यादौ ण्यन्न भवतीति भावः । एतच्च ददातीत्यादिसूत्रे विभाषाग्रहणमनुबन्धानामनेकान्तत्वपक्षे शविषये णस्याप्राप्तौ विभाषा, एकान्तत्वपक्षे तु प्राप्तविभाषेति पक्षद्वयसाधारणं विभाग्रहणं लिङ्गं मनोरमायामेकान्तत्वपक्ष एवोपन्यस्तमिति तदनुसारेणेहाप्युक्तम् । अनेकान्तत्वपक्षे त्वसाधारणं लिङ्गम् 'उदीचां माङः—' इति सूत्रे माङो ग्रहणम् । मेङ इत्यत्र हि सत्यपि ङकारानुबन्धे तस्यानवयवत्वाद् एजन्तत्वमविहतमिति 'आदेच उपदेशे—'इत्यात्वस्वीकारादिति दिक् । ण्यदेवेति । न 'तित्स्वरितम्' इति स्वरिते सति आलम्भ्य इत्यत्र समासान्तोदात्तत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेण स्वरितान्तत्वमिष्टं सिध्यति, यति तु 'यतोऽनावः' इत्याद्युदात्तत्वेनोत्तरपदाद्युदात्तत्वं प्रसज्येत, तच्चानिष्टमिति भावः । उपात्प्रशंसायाम् । यादौ प्रत्यये विवक्षित उपपूर्वाल्लभेर्नुम् स्यात्प्रशंसायाम् । सा चेह गम्यमानतया विशेषणम् । धात्वर्थस्तु प्राप्तिरेव, तेन यस्य प्राप्तिर्यस्माद्वा प्राप्तिः प्रशंसाहेतुर्भवति तदि-

( ३-१-९९ ) शक्यम् । सह्यम् । **२८४८ गदमदचरयमश्चानुपसर्गे** ( ३-१-१०० ) गद्यम् । मद्यम् । चर्यम् । 'चरेराङि चागुरौ' (वा० १९२५ ) आचर्यो देशः, गन्तव्य इत्यर्थः । अगुरौ किम्-आचार्यो गुरुः । यमेर्नियमार्थम् सोपसर्गान्मा भूदिति । प्रयाम्यम् । निपूर्वात्स्यादेव, 'तेन तत्र न भवेद्विनियम्यम्' (वा० १९३० ) इति वार्तिकप्रयोगात् । एतेन 'अनियम्यस्य नायुक्तिः' 'त्वया नियम्या ननु दिव्यचक्षुषा' इत्यादि व्याख्यातम् । नियमे साधुरिति वा ।

**२८४९ अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु** । ( ३-१-१०१ ) वदेर्नञ्युपपदे 'वदः सुपि—' (सू० २८५४ ) इति यत्क्यपोः प्राप्तयोर्यदेव. सोऽ

---

पञ्चम्यर्थे षष्ठी । आभ्यां यदित्यर्थः । ण्यतोऽपवादः । **गदमद** । गद, मद च यम् एषां चतुर्णां द्वन्द्वः । अनुपसर्ग इति सप्तमी पञ्चम्यर्थे । एभ्यो अनुपसर्गेभ्यो यदित्यर्थः । ण्यतोऽपवादः । उपसर्गाद् ण्यदेव । प्रगाद्यमित्यादि । **चरेरा** चागुराविति । वार्तिकमिदम् । आङि उपसर्गे सत्यपि चरेर्यत्स्यादगुरौ इत्यर्थः । **आचार्यो गुरुरिति** । शुश्रूषणीय इत्यर्थः । ननु 'पोरदुपधात्' इत्येव सि यमेरिह ग्रहणं व्यर्थमित्यत आह **यमेर्नियमार्थमिति** । अनुपसर्गादेव यमेर्यदि नियमार्थमित्यर्थः । तत्फलमाह **सोपसर्गान्मा भूदिति** । ननु 'अनियम्य नायुक्तिः' इत्यत्र 'त्वया नियम्या ननु दिव्यचक्षुषा' इत्यादौ च निपूर्वाद्यमेः क यत् । अनुपसर्गादिति निषेधादित्य आह **निपूर्वात्स्यादेवेति** । यदिति शेषः । कुत इत्यत आह **तेन तत्रेति** । प्रकारान्तरेण समाधत्ते **नियमे साधुरि** वेति । 'यमः समुपनिविषु च' इति निपूर्वाद्यमेर्भावे अप्प्रत्यये नियमशब्दः । नियमे साधुरित्यर्थे 'तत्र साधुः' इति प्राग्घितीये यत्प्रत्यये नियम्यशब्दो व्युत्प इत्यर्थः । **अवद्यपण्य** । अवद्य, पण्य, वर्य एषां द्वन्द्वात्प्रथमाबहुवचनम् । ग पणितव्य, अनिरोध एषां द्वन्द्वात्सप्तमीबहुवचनम् । अवद्यादयस्त्रयः क्रमाद् गर्ह्या त्रिष्वर्थेषु निपात्यन्ते इत्यर्थः । ननु 'वदः सुपि—' इत्येव सिद्धे अवद्यग्रहणं व्यर्थमित् आह **नञ्युपपदे इति** । यत्क्यपोः स्वरे विशेषः, संप्रसारणतदभावौ चेति भावः ।

---

होदाहरणम् । विपरीतं तु प्रत्युदाहरणम् । इहापि यादौ प्रत्यये विवक्षिते इत्यथा न्नुमि कृते ण्यति सत्यन्तस्वरितत्वं भवति । यति तु सत्युत्तरपदाद्युदात्तत्वं स्यात्तनु प्राचा तु स्वरे विशेषमनालोच्य 'पोरदुपधात्' इति यतमेव स्वीकृत्य यति परे नुमिति व्याख्यातं तदाकरविरोधादुपेक्ष्यमित्याहुः । **गदमद** । व्यत्ययेन पञ्चम्यर्थे सप्तमीप एभ्योऽनुपसर्गेभ्यो यत्स्याद् ण्यतोऽपवादः । अनुपसर्गे किम्, 'न नैषधे कार्यमि निगाद्यम' इति श्रीहर्षः । **यमेरिति** । 'पोरदुपधात्' इत्यनेनैव सिद्धेरिति भावः । अनु **नियमे साधुरिति** । 'यमः समुपनिविषु च' इति वैकल्पिकेऽप्प्रत्यये कृते 'त साधुः' इति तद्धितो यदित्यर्थः । यद्यप्यस्मिन्पक्षे 'कृत्यानां कर्तरि वा' इत्यस्याप्रवृ कर्तरि तृतीया दुर्लभा तथापि त्वयेति तेनेति च करणत्वविवक्षया तृतीयेति स्थितं द गतिर्बोध्या । केवलाद्यतं कृत्वा निशब्देन समास इत्यपरे । यद्वा 'यमोऽपरिवेषु मित्' इति मतमाश्रित्य 'पर्यवसितं नियमयन्' इत्यादाविव मित्त्वं स्वीकृत्य ण्यन्ताद्

गर्ह्यायामेवेत्युभयार्थं निपातनम् । अवद्यं पापम् । गर्ह्यं किम्—अनुद्यं गुरुनाम । तद्धि न गर्ह्यं वचनानर्हं च ।

आत्मनाम गुरोर्नाम नामातिकृपणस्य च ।
श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥' इति स्मृतेः ।

पण्या गौः, व्यवहर्तव्येत्यर्थः । पाण्यमन्यत् । स्तुत्यर्हमित्यर्थः । अनिरोधोऽप्रतिबन्धस्तस्मिन्विषये वृङो यत् । शतेन वर्या कन्या । वृत्यान्या ।

२८५० वह्यं करणम् । (३-१-१०२) वहन्त्यनेनेति वह्यं शकटम् । करणं

---

अवद्यं पापमिति । गर्हितत्वादवाच्यमित्यर्थः । अनुद्यं गुरुनामेति । अत्र नञि उपपदे 'वदः सुपि' इति क्यपि वचिस्वपियजादीनां किति' इति संप्रसारणे रूपम् । वचनानर्हमित्यर्थः । अत्र गर्ह्याया अप्रतीतेः यदेवेति न नियम इति भावः । ननु गुरुनाम्नः अगर्ह्यत्वात् कथं वचनानर्हत्वमित्यत आह तद्धि न गर्ह्यं वचनानर्हं चेति । कुत इत्यत आह आत्मनामेति । पण्या गौरिति । पणधातोर्व्यवहारार्थकाद् यन्निपात्यते इति भावः । यद्यपि 'पण व्यवहारे स्तुतौ च' इति धातोः अर्थद्वयमस्ति, तथापि पण्यशब्दस्य प्रयोगवलेन व्यवहर्तव्य एव रूढत्वादिह व्यवहारार्थक एव गृह्यते, तदाह व्यवहर्तव्येति । क्रेतव्येत्यर्थः । पाण्यमन्यदिति । ण्यति उपधावृद्धिरिति भावः । व्यवहर्तव्यादन्यदित्यर्थः, तदाह स्तुत्यर्हमिति । अप्रतिबन्ध इति । अनियम इत्यर्थः । वृङो यदिति । 'वृङ् संभक्तौ' इति क्र्यादिकस्यैवात्र ग्रहणम्, न तु 'वृञ् वरणे' इत्यस्य, अनिरोधरूपार्थस्य संभक्तिवाचित्व एव सामञ्जस्यादिति भावः । शतेन वर्या कन्येति । पुरुषशतेन परिग्रहीतुमर्हा, अनेनैव वरणीयेति नियमो नास्तीत्यर्थः । वृत्यान्येति । अनुरूपेण वरणीयेत्यर्थः । 'एतिस्तुशास्वृदृजुषः क्यप्' इति क्यपि तुक् । अत्र अनियमस्य अप्रतीतेर्न यत् । अत्र वर्याशब्दस्य स्त्रीलिङ्गस्य ग्रहणात्पुंसि वार्या ऋत्विज इति वृत्तिः । वह्यं करणम् । वहेः करणे यद् निपात्यते ।

---

ऽोध्यः । अथ वा संज्ञापूर्वकविधेरनित्यत्वाद् ण्यत्येव वृद्धिर्न प्रवृत्तेति दिक् । एवं च घातिकप्रयोगोऽप्यन्यथासिद्ध इति तद्बलेन निपूर्वाद्यदिति न कल्पनीयमिति भावः । अनुद्यमिति । अत्र वदेः क्यबेव भवति, यज्ञादित्वात्संप्रसारणम्, 'नलोपो नञः' तस्मान्नुडचि' । व्यवहर्तव्येति । यद्यपि पणितव्यशब्दोऽर्थद्वयसाधारणस्तथापि निपातनस्येह रूढ्यर्थत्वाद्व्यवहर्तव्य एवायं निपात्यते । उक्तं च हरिणा—'धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च । अनुबन्धविकाराणां रूढ्यर्थे च निपातनम्' इति । अनुबन्धविकाराणां नियमस्य च प्राप्त्यर्थमिति पूर्वेणान्वयः । शतेनेति । शतशब्दोऽनियतपरः । कन्यायां वरणे वरयितॄणां नियमो नास्तीत्यर्थः । वर्येति । संभक्तव्येत्यर्थः । वृङ् संभक्तावित्यस्येदं निपातनम् तत्रैवानिरोधरूपस्यार्थस्य संभवादिति भावः । अनिरोधेष्वित्यस्यानुक्तौ वृञोऽपि स्यादिति ध्वनयति वृत्येति । 'एतिस्तुशास्—' इत्यादिना वृञः क्यप् । इह सूत्रे शब्दादीनि निर्विभक्तिकानि पृथक्पदानि तत्र वर्याशब्दष्टाबन्तोऽनक्रियते । न त्वयं द्वन्द्वेन जसन्तेन निर्देशः । तेन वर्येति

किम्-वाह्यम्, वोढव्यम् । २८५१ अर्यः स्वामिवैश्ययोः । (३-१-१०३) 'ऋ गतौ' अस्माद्यत् । ण्यतोऽपवादः । अर्यः स्वामी वैश्यो वा । अनयोः किम्-आर्यो ब्राह्मणः, प्राप्तव्य इत्यर्थः । २८५२ उपसर्या काल्या प्रजने । (३-१-१०४) गर्भग्रहणे प्राप्तकाला चेदित्यर्थः । उपसर्या गौः । गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः । प्रजने काल्या इति किम्-उपसार्या काशी । प्राप्तव्येत्यर्थः । २८५३ अजर्यं संगतम् । (३-१-१०५) नञ्पूर्वाज्जीर्यतेः कर्तरि यत् संगतं चेद्विशेष्यम् । न जीर्यतीत्यजर्यम् । 'तेन संगतमार्येण रामाजर्यं कुरु द्रुतम्' इति भट्टिः । 'मृगैरजर्यं जरसोपदिष्टमदेहबन्धाय पुनर्बबन्ध' इत्यत्र तु संगतमिति विशेष्यमध्याहार्यम् । संगतं किम्-अजरिता कम्बलः । भावे

---

ण्यतोऽपवादः । अर्यः स्वामिवैश्ययोः । अस्माद्यदिति । निपात्यत इति शेषः । ण्यतोऽपवाद इति । 'ऋहलोः-' इति प्राप्तस्य ण्यतोऽपवाद इत्यर्थः । यति ऋकारस्य गुणे रपरत्वम्, तदाह अर्यः स्वामीति । आर्यो ब्राह्मण इति । ण्यति वृद्धौ रपरत्वमिति भावः । उपसर्या । प्रजनं प्रजनो गर्भग्रहणम्, भावे घञ्, 'जनिवध्योश्च' इति वृद्धिनिषेधः । कालः प्राप्तोऽस्याः काल्या, 'तदस्य प्राप्तम्-' इत्यनुवर्तमाने 'कालाद्यत्' इति यत् । चेदित्यध्याहार्यम्, तदाह गर्भग्रहणे प्राप्तकाला चेदिति । गर्भग्रहणे प्राप्तकाला स्त्रीपशुव्यक्तिः विवक्षिता चेद् उपसर्या इति निपात्यते । उपपूर्वात् सृधातोः यदिति फलितम् । ण्यतोऽपवादः । अजर्यम् । कर्तरि यदिति । 'कर्तरीति वक्तव्यम्' इति वार्तिकम् । निपातनात् कर्तरीति लभ्यत इति तदाशयः । संगतमिति । संगतं संगमः । न जीर्यतीत्यजर्यमिति । मित्रत्वमिति शेषः । जरितृ न भवतीत्यर्थः । अत्र भट्टिप्रयोगमाह तेनेति । हे राम तेन आर्येण अजर्यम् अनश्वरं संगतं संगमं द्रुतं कुरु इत्यन्वयः ननु 'मृगैरजर्यं जरसा' इत्यत्र संगतशब्दाभावात् कथं यदित्यत आह मृगैरित्यादि । कालिदासकाव्यमिदम् । अजरितेति । तृजन्तम् । अत्र संगतशब्दाभावान्न यदिति भावः । भावे त्विति । भावस्य

---

स्त्रियामेव निपात्यते । अस्त्रियां तु वृङः 'ऋहलोर्ण्यत्', वार्या ऋत्विजः । ऋत्विजामपि यज्ञमात्रे वरणीयत्वादनिरोधोऽस्ति, स्त्रीत्वं तु नास्तीति ण्यदेव भवति । एतच्च वृत्तिकारमतम् । न चात्र 'एतिस्तु-' इति क्यप् शङ्क्यः । तत्र वृञ एव ग्रहणं न तु वृङ इति सिद्धान्तात् । भट्टिस्तु द्वन्द्वाज्जसा निर्देश इति मत्वा पुंल्लिङ्गेऽपि यतं प्रायुङ्क्त 'सुग्रीवो मम वर्योऽसौ' इति । वाह्यमिति । वहनकर्मेत्यर्थः । उपसर्या । उपपूर्वात्सरतेः सर्तेर्वा यन्निपात्यते । कालः प्राप्तोऽस्याः काल्या । 'तदस्य प्राप्तम्' इति वर्तमाने 'कालाद्यत्' इति यत् । प्रजननं प्रजनो गर्भग्रहणम् । भावे घञ् 'जनिवध्योश्च' इति वृद्धिनिषेधः । उपसार्येति । कर्मणि ण्यत् । कर्तरि यदिति । 'तयोरेव-' इति भावे प्राप्ते कर्तरि यन्निपात्यत इति भावः । संगतं चेदिति । नपुंसके भावे क्तः । विशेष्यमिति । इहाजर्यमिति समुदायस्य संगतं वाच्यमित्यर्थो न ग्राह्यः, पर्यायाणां युगपत्प्रयोगासंभवेनाजर्यं सत्तं संगतमिति प्रयोगानापत्तेः । तेन

तु संगतकर्तृकेऽपि ण्यदेव । अजार्यं संगतेन । २८५४ वदः सुपि क्यप् च (३-१-१०६) उत्तरसूत्रादिह भाव इत्यपकृष्यते । वदेर्भावे क्यप् स्याच्चाद्यद-नूपसर्गे सुप्युपपदे । ब्रह्मोद्यम्, ब्रह्मवद्यम् । ब्रह्म वेदः, तस्य वदनमित्यर्थः । कर्मणि प्रत्ययावित्येके । उपसर्गे तु ण्यदेव । अनुवाद्यम् । अपवाद्यम् । २८५५ भुवो भावे । (३-१-१०७) क्यप्स्यात् । ब्रह्मणो भावो ब्रह्मभूयम् । सुपीत्येव, भव्यम् । अनुपसर्गे इत्येव, प्रभव्यम् । २८५६ हनस्त च । (३-१-१०८) अनुपसर्गे सुप्युपपदे हन्तेर्भावे क्यप्स्यात्तकारश्चान्तादेशः । ब्रह्मणो हननं ब्रह्महत्या । स्त्रीत्वं लोकात् । २८५७ एतिस्तुशास्वृदृजुषः क्यप् । (३-१-१०९) एभ्यः क्यप्स्यात् । २८५८ ह्रस्वस्य पिति कृति तुक् । (६-१-७१) इत्यः । स्तुत्यः । 'शास इदङ्हलोः' (सू० २४८६) । शिष्यः । वृ इति वृणो ग्रहणं न वृङः । वृत्यः । वृङस्तु वार्या ऋत्विजः ।

---

संगतकर्तृकत्वेपि संगतस्य प्रत्ययवाच्यत्वाभावाद् न यदित्यर्थः । वदः सुपि । उत्तरेति । 'भुवो भावे' इत्युत्तरसूत्राद्भावे इत्यपकृष्यते इत्यर्थः । भूधातोरकर्मकत्वेन उत्तरसूत्रे भावग्रहणस्य वैयर्थ्यादिति भावः । अनुपसर्गे इति । 'वदः सुप्यनुपसर्ग-ग्रहणम्' इति भाष्यादिति भावः । ब्रह्मोद्यमिति । वदेः क्यपि 'वचिस्वपि–' इति संप्रसारणम् । वस्तुतस्तु नेह भावग्रहणमपकृष्यते । तत्र भावग्रहणमुत्तरार्थमिति भाष्यादिति मतमनुसृत्याह कर्मणि प्रत्ययावित्येके इति । क्यब्यतावित्यर्थः । भुवो भावे । ब्रह्मभूयमिति । कित्वान्न गुणः । क्लीबत्वंलोकात् । भव्यमिति । भाव इत्यर्थः । अत्र सुबुपपदत्वाभावाद् यदेव, गुणः, 'वान्तो यि–' इत्यवादेशः। प्रभव्य-मिति । प्रभाव इत्यर्थः । हनस्त च । अन्तादेश इति । प्रकृतेरिति शेषः । भावे-किम् ? घात्यो वृषलः । अनुपसर्गे किम् ? प्रघातः । निरुपपदं हत्येति तु असाध्वेव । एतिस्तु । एति, स्तु, शास्, वृ, दृ, जुष् एषां षण्णां समाहारद्वन्द्वात्पञ्चमी । सुप्यनुपसर्गे भाव इति निवृत्तम्, तदाह एभ्यः क्यप्स्यादिति । ह्रस्वस्य । स्पष्टमिति न व्याख्यातम् । इत्य इति । इणः क्यपि तुक् । उपेयमित्यत्र तु ईङो दैवादिकाद्यत् वृञो

---

संगतमिति भट्टिप्रयोगानुपपत्तेश्च । वदः । सकर्मकत्वाद्भावे कृत्यप्रत्ययो दुर्लभः 'लः कर्मणि–' इति सूत्र इव 'तयोरेव–' इत्यत्रापि सकर्मकेभ्यः कर्मणि अकर्मकेभ्य एव भावे इति सिद्धान्तात् । अत आह भाव इत्याकृष्यत इति । 'भुवो भावे' इत्य-त्रानुपसर्ग इत्यनुवर्तनाद् निरुपसर्गस्य भवतेरकर्मकत्वात् 'तयोरेव कृत्य–' इति भावे कृत्यप्रत्ययसिद्धौ भावग्रहणस्य वैयर्थ्यशङ्कायां भावग्रहणमुत्तरार्थमिति भाष्ये स्थितं तद्भाष्यस्वारस्यग्राहिणां मतमाह कर्मणीति । अनुपसर्ग इति । सुपि किम, 'हनस्तो चिण्णलोः' । घातः । अनुपसर्गे किम्, प्रघातः, भावे घञ् । एतिस्तु । एभ्य इति सुप्यनुपसर्गे भावे इति च निवृत्तमिति भावः । एतीतीण एव ग्रहणं नेङिकोः । तयोरधिपूर्वयोरेव ग्रहणादेतीति निर्देशानुपपत्तेः । तथा च रक्षार्थं वेदाना-मध्येयं व्याकरणमिति भाष्ये यदेव प्रयुक्तः । केचित्तु 'इणवदिक इति वक्तव्यम्' इति वचनादिकोऽपि भवतीत्यधीत्यामातेत्युदाहरन्ति । इत्य इति । कथं तर्हि उपेयमिति

आदृत्यः। जुष्यः। पुनः क्यबुक्तिः परस्यापि ण्यतो बाधनार्था। अवश्यस्तुत्यः। 'शंसिदुहिगुहिभ्यो वा' (वा. १८३५) इति काशिका। शस्यम्, शंस्यम्। दुह्यम्, दोह्यम्। गुह्यम्, गोह्यम्। 'प्रशस्यस्य श्रः' (सू. २००९) 'ईडवन्दवृशंसदुहां ण्यतः' (सू. ३७०२) इति सूत्रद्वयबलाच्छंसेः सिद्धम्। इतरयोस्तु मूलं मृग्यम् 'आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम्' (वा. १९२५)। अञ्जू व्यक्तिम्रक्षणादिषु, बाहुलकात्करणे क्यप्, 'अनिदिताम्—' (सू. ४१५) इति नलोपः आज्यम्। २८५९ ऋदुपधाच्चाक्लृपिचृतेः (३-१-११०)

---

ग्रहणमिति। वार्तिकमिदम्। न वृङ इति। 'वृङ संभक्तौ' इति ङितः क्रैयादिकस्य न ग्रहणमित्यर्थः। वार्या ऋत्विज इति। अवश्यं भजनीया इत्यर्थः। अत्र 'वृङ संभक्तौ' इत्यस्माद् ण्यदित्यर्थः। अवद्यपण्यवर्या इति निपातनसिद्धो यत्तु न, अत्र निरोधस्य नियमस्य विवक्षितत्वात्। ननु 'वदः सुपि—' इत्यतः अनुवृत्त्यैव सिद्धे क्यब्ग्रहणमिह व्यर्थम्। न च चकारानुकृष्टयतोऽप्यनुवृत्तिनिवृत्तये क्यब्ग्रहणमिति वाच्यम्, चकारस्य अस्वरितत्वेन 'भुवो भावे' इत्याद्युत्तरसूत्रेष्वनुवृत्त्यभावादित्यत आह क्यबुक्तिः परस्यापीति। 'ओरावश्यके' इति विहितस्येत्यर्थः। वेति काशिकेति। वा क्यप्। तदभावे हलन्तत्वाद् ण्यत्। भाष्ये त्वेतन्न दृश्यते इति भावः। शस्यम्, शंस्यमिति। क्यप्पक्षे 'अनिदिताम्' इति नलोपः। दुह्यमिति। क्यप्पक्षे कित्त्वान्न गुणः। अत्र 'शंसिदुहिगुहिभ्यो वा' इत्यस्य भाष्ये अदर्शनेऽपि शंसेर्ण्यत्क्यपौ प्रामाणिकावित्याह प्रशस्यस्येति। 'प्रशस्यस्य श्रः' इति निर्देशबलात् शंसेः क्यप्सिद्धः। 'ईडवन्दवृशंसदुहां ण्यतः' इत्याद्युदात्तत्वविधौ शंसेर्ण्यदन्तत्वानुवादबलाद् ण्यत्सिद्धः। ततश्च शस्यं शंस्यमिति रूपद्वयं सिद्धम्। इतरयोस्तु दुहिगुह्योः क्यब्विकल्पे मूलं नास्तीत्यर्थः। उपसंख्यानमिति। क्यप इति शेषः। आज्यमिति। न चाङ्पूर्वकत्वे पदपाठे अवग्रहः स्यादिति वाच्यम्, इष्टापत्तेः। पदकाराणामवग्रहाभावस्त्वप्रामाणिक एव। पदपाठस्याधुनिकत्वाद् इति भाष्ये स्पष्टम्, एवं च अस्मद्रियगित्यस्म द्रियगित्यवग्रहः अप्रामाणिक एव। अस्मद्रि अक् इत्येवावग्रहो युक्तः, अस्मच्छब्दस्य टेरद्र्यादेशविधानाद् इत्याद्यूह्यम्। ऋदुपधाच्चाक्लृपिचृतेः। क्लृप्चृती वर्जयित्वा

---

ईङ् गताविति दैवादिकाद्यत्। न वृङ इति। 'ईडवन्द—' इति ज्ञापकात् तत्र हि ईडवन्दिभ्यां साहचर्यादात्मनेपदिनो वृङ एव ग्रहणमिति भावः। परस्यापीति। 'ओरावश्यके' इति प्राप्तस्य ण्यस्यावकाशोऽवश्यलाव्यमिति आवश्यकविवक्षायां स्तुत्य इत्यादौ क्यपोऽवकाशः अवश्यस्तुत्य इत्यादावुभयप्राप्तौ 'विप्रतिषेधे परम्—' इति ण्यत्स्यात् तन्माभूदिति पुनः क्यबुक्तिरिति भावः। आङ्पूर्वादञ्जेरिति। ननु ण्यत्येव नलोपः कस्मान्नोक्त इति चेन्न। कुत्वप्रसङ्गात्तित्स्वरप्रसङ्गाच्च। तस्मात्क्यबन्त एवाज्यशब्दः। नन्वेवमवग्रहः प्राप्नोति। न चेष्टापत्तिः, 'आज्यं किमासीत्' इत्यादौ पदकारैस्तदकरणादिति चेत्। अत्र भाष्यम्——न लक्षणेन पदकारा अनुवर्त्याः पदकारैस्तु लक्षणमनुवर्त्यमिति। सत्यपि अवान्तरपदत्वे 'ऋत्विजम्', 'पूर्वेभिः' इत्या-

वृत् वृत्यम् । वृध् वृध्यम् । क्लृपिचृत्योस्तु कल्प्यम्, चर्त्यम् । तपरकरण किम्—कृत् कीर्त्यम् । अनित्यण्यन्तश्चुरादय इति णिजभावे ण्यत् । णिजन्तात्तु यदेव । २८६० ई च खनः । (३-१-१११) चात्क्यप् । आद्गुणः (सू. ६९) खेयम् । इ चेति ह्रस्वः सुपठः । २८६१ भृञोऽसंज्ञायाम् । (३-१-११२) भृत्याः कर्मकराः । भर्तव्या इत्यर्थः । क्रियाशब्दोऽयं न तु संज्ञा । समश्च बहुलम् । संभृत्याः । संभार्याः । असंज्ञायामेव विकल्पार्थमिदं वार्तिकम् । असंज्ञायां किम्—भार्या नाम क्षत्रियाः । अथ कथं भार्या वधूरिति । इह हि 'संज्ञायां समज–'

---

ऋदुपधाद्धातोः क्यबित्यर्थः । ननु तपकरणमिह व्यर्थमित्यत आह अनित्यण्यन्ता इति । णिजन्तात्तु यदेवेति । 'अचो यत्' इत्यनेनेति भावः । ई च खनः । चात् क्यबिति । खनेः क्यप् स्यात् प्रकृतेः ईकारोऽन्तादेशश्चेत्यर्थः । ह्रस्वः सुपठ इति । ह्रस्वस्य इकारस्य आद्गुणेन खेयमिति सिद्धेरिति भावः । भृञोऽसंज्ञायाम् । क्यबिति शेषः । भृत्याः कर्मकरा इति । भृत्यर्थं कर्म कुर्वाणा इत्यर्थः । 'कर्मणि भृतौ' इति कृञष्टः । भर्तव्या इति । वेतनदानेन परार्थे कर्मणि प्रेषयितव्या इत्यर्थः । ननु भृत्यशब्दस्य कर्मकरेषु रूढत्वात्संज्ञाशब्दत्वमेवेत्यत आह क्रियाशब्द इति । भार्या नाम क्षत्रिया इति । क्षत्रियविशेषेषु रूढः संज्ञाशब्दोऽयमिति भावः । अथ कथं भार्येति । क्यपा भवितव्यमित्याक्षेपः । ननु वध्वां भार्याशब्दस्य संज्ञाशब्दत्वाद् 'भृञोऽसंज्ञायाम्' इत्यस्याप्रवृत्तेरयमाक्षेपोऽनुपपन्न इत्यत आह इह हीति । 'स्त्रियां क्तिन्' इत्यतः

---

दाविव संप्रदायानुरोधेन क्वचिदवग्रहो न क्रियते इत्यादि तदाशयः । क्लृपिचृत्योस्त्विति । कृपू सामर्थ्ये । चृती हिंसाग्रन्थनयोः । कल्प्यमिति । कृपेर्लत्वस्यासिद्धत्वाद् ऋलृवर्णयोः सावर्ण्यविधानाच्च ऋदुपधत्वम् । ह्रस्वः सुपठ इति । दीर्घं पठन् सूत्रकृतस्त्वयमाशयः—दीर्घनिर्देश इ इ इति प्रश्लेषार्थस्तत्र द्वितीय इकारो 'ये विभाषा' इत्यात्वबाधनार्थः । अन्यथा 'ये विभाषा' इत्यस्यावकाशः, खायते । खन्यते । इत्वस्यावकाशो यस्मिन् पक्षे आत्वं नास्ति । आत्वपक्षे तु उभयप्रसङ्गे परत्वादन्तरङ्गत्वाच्चात्वं स्याद् 'ये विभाषा' इत्यत्र हि ये इति विषयसप्तमी । तथा च यकारादौ बुद्धिस्थे एव प्राप्तमात्वमन्तरङ्गम् । ईकारस्तु क्यपा सह विधानाद् बहिरङ्गः । तथा चान्तरङ्गस्यात्वस्य बाधनाय प्रश्लेषेण द्वितीय इकारविधिरावश्यक इति ई चेति दीर्घोच्चारणं कृतमिति । दीर्घं प्रत्याचक्षाणस्य भाष्यकृतस्त्वयमाशयः । इत्वमन्तरङ्गं परनिमित्तमनपेक्ष्य विधानात्, क्यप्संनियोगशिष्टं हि तद् । आत्वं तु बहिरङ्गं ये इतिपरसप्तम्याश्रयणात् । एवं च इत्वेनात्वबाधो न्याय्य एवेति दीर्घो न पठनीयः । ह्रस्वपाठे मात्रालाघवमस्तीति तदनुरोधेन ये इति परसप्तम्याश्रयणमपि युक्तमिति । स्यादेतत्—इ चेति ह्रस्वादेशाभ्युपगमे तस्यादेशस्य पूर्वेण सह आद्गुणे तस्यासिद्धतया 'ह्रस्वस्य पिति–' इति तुक् स्यात्, 'षत्वतुकोरसिद्धः' इति षत्वे तुकि च कर्तव्ये एकादेशशास्त्रस्यासिद्धत्वस्वीकारात् । अतो दीर्घ एव विधेय इति चेत् । मैवम् । पदान्तपदाद्योरादेशोऽसिद्धो न त्वन्योऽपीति सिद्धान्तात् । अन्यथा वृक्षे छत्रमित्यत्र ङावाद्-

(सू. ३२७६) इति क्यपा भाव्यम् । संज्ञापर्युदासस्तु पुंसि चरितार्थः । सत्यम् । बिभर्तेर्भृ इति दीर्घान्तात् क्र्यादेर्ण्यत् । क्यप् तु भरतेरेव । 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषया । २८६२ मृजेर्विभाषा । ( ३–१–११३ ) मृजेः क्यब्वा स्यात् । पक्षे ण्यत् । मृज्यः । २८६३ चजोः कु घिण्ण्यतोः । (७–३–५२) चस्य जस्य च कुत्वं स्याद् घिति ण्यति च प्रत्यये परे । ('निष्ठायामनिट इति वक्तव्यम्' (वा. ४५५१) । तेनेह न । गर्ज्यम्) । 'मृजेर्वृद्धिः' (सू. २४७३) । मार्ग्यः । २८६४ न्यङ्क्वादीनां च । (७–३–५३) कुत्वं स्यात् । न्यङ्कुः । 'नावञ्चेः' (उ. सू. १७) इत्युप्रत्ययः । २८६५ राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः । ( ३—१—११४ ) एते सप्त क्यबन्ता निपात्यन्ते । राज्ञा सोतव्योऽभिषवद्वारा निष्पादयितव्यः । यद्वा

---

स्त्रियामित्यनुवृत्तौ 'व्रजयजोर्भावे क्यप्' 'संज्ञायां समजनिषद–' इति सूत्रेण क्यप् स्यादित्यर्थः। ननु संज्ञायां भृञः क्यब्विधौ 'भृञोऽसंज्ञायाम्' इत्यत्र असंज्ञायामिति व्यर्थमित्यत आह संज्ञापर्युदासस्त्विति । समाधत्ते सत्यमिति । 'डुभृञ् धारणपोषणयोः' इति जुहोत्यादौ ह्रस्वान्तो ड्वित् ञिच्च । 'भृ भर्त्सने, भरणेऽपि' इति क्र्यादौ दीर्घान्तः । आभ्याम् 'ऋहलोर्ण्यत्' इति ण्यदेवेत्यर्थः । क्यप् तु भरतेरेवेति । 'भृञ् भरणे' इति भ्वादौ ह्रस्वान्तो ञित् । अस्यैव 'संज्ञायां समजनिषद–' इत्यत्र 'भृञोऽसंज्ञायाम्' इत्यत्र च भृञ्ग्रहणेन ग्रहणम् । न तु डुभृञो जौहोत्यादिकस्य । न च क्रैयादिकस्य निरनुबन्धकस्य दीर्घान्तस्येति भावः, कुत इत्यत आह तदनुबन्धकेति । 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषयेत्यर्थः । बिभर्तेः क्यबभावे बीजमिदम् । क्रैयादिकस्य दीर्घान्तत्वाद् न क्यब् इति बोध्यम् । मृजेर्विभाषा । क्यप्पक्षे उदाहरति मृज्य इति । कित्त्वान्न गुणः । चजोः कु घिण्ण्यतोः । कु इत्यविभक्तिको निर्देशः । चजोर्घिण्ण्यतोश्च यथासंख्यं तु न, 'तेन रक्तं रागात्' इति घञि जस्य कुत्वनिर्देशात् । राजसूय । राज्ञेति । क्षत्रियेणेत्यर्थः । अभिषवेति । ग्रावभी रसनिष्पत्त्यर्थं सोमलतानां कुट्टनमभिषवः, तत्प्रणाडिकया निष्पादयितव्यो यज्ञविशेषो राजसूय इत्यन्वयः । यद्वेति । लताविशेषात्मकः सोमः

---

गुणस्यासिद्धतया छं चेति ह्रस्वाश्रयो नित्यस्तुक् स्यात् । इष्यते तु दीर्घात्पदान्ताद्वेति वैकल्पिक इति दिक् । 'भृञोऽसंज्ञायाम्' इत्यसंज्ञाग्रहणसामर्थ्याद्भार्येत्यत्र सूत्रान्तरेणापि क्यब् न भविष्यतीत्यत आह पुंसि चरितार्थ इति । भार्या नाम क्षत्रिया इत्यत्रेत्यर्थः । तदनुबन्धेति । डुभृञ् इत्यनेकानुबन्धत्वाद् बिभर्तेः क्यपोऽप्रसङ्ग इति भावः । मृजेर्विभाषा । ऋदुपधत्वान्नित्यं क्यपि प्राप्तेऽयमारम्भः । चजोः । यथासंख्यं नेह विवक्षितं 'तेन रक्तं रागात्' इति लिङ्गादिति कैयटहरदत्तादिभिरुक्तं तदालोच्याह चस्य जस्य चेत्यादि । घिति ण्यति च चस्य कुत्वं घिति ण्यति च जस्य कुत्वमिति विवेकः । न्यङ्कुरिति । 'कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः' इत्यमरः । राजसूय । यद्वेति । राजानं क्रीणन्ति इत्यादौ तथादर्शनादिति भावः ।

लतात्मकः सोमो राजा स सूयते कण्ड्यतेऽत्रेत्यधिकरणे क्यब्निपातनाद्दीर्घः। राजसूयः, राजसूयम्। अर्धर्चादिः। सरत्याकाशे सूर्यः। कर्तरि क्यब्निपातनादुत्वम्। यद्वा 'षू प्रेरणे' तुदादिः। सुवति कर्मणि लोकं प्रेरयति क्यपो रुट्। मृषोपपदाद्वदेः कर्मणि नित्यं क्यप्। मृषोद्यम्। विशेष्यनिघ्नोऽयम्। 'उच्छ्राय-सौन्दर्यगुणा मृषोद्याः'। रोचतेः रुच्यः। गुपेरादेः कत्वं च संज्ञायाम्। सुवर्णरजतभिन्नं धनं कुप्यम्। गोप्यमन्यत्। कृष्टे स्वयमेव पच्यन्ते कृष्टपच्याः कर्मकर्तरि। शुद्धे तु कर्मणि कृष्टपाक्याः। न व्यथतेऽव्यथ्यः। २८६६ भिद्योद्ध्यौ नदे। (३-१-११५) भिदेरुज्झेश्च क्यप्। उज्झेर्धत्वं च। भिनत्ति कूलं भिद्यः। उज्झत्युदकमुद्ध्यः। नदे किम्—भेत्ता। उज्झिता। २८६७ पुष्यसिध्यौ नक्षत्रे। (३-१-११६) अधिकरणे क्यब्निपात्यते। पुष्यन्त्यस्मिन्नर्थाः पुष्यः। सिध्यन्त्यस्मिन्सिध्यः। २८६८ विपूयविनीयजित्या मुञ्जकल्कहलिषु। (३-१-११७) पूङ्नीञ्जिभ्यः क्यप्। विपूयो मुञ्जः।

---

राजशब्देन विवक्षितः, राजानं क्रीणातीत्यादौ तथा प्रसिद्धेः। स राजा सूयते अभिषूयते अत्र यज्ञविशेषे इति व्युत्पत्त्या राजसूय इत्यन्वयः। 'कर्तरि कृत्' इत्यधिकारात् कथमधिकरणव्युत्पत्तिरित्यत आह अधिकरणे क्यबिति। कुत इत्यत आह निपातनादिति। ननु षुञ्धातोः क्यपि कथं दीर्घः। 'अकृत्सार्वधातुकयोः—' इत्यस्य कृत्यप्रवृत्तेरित्यत आह निपातनाद्दीर्घ इति। निपातनादित्युभयत्रान्वेति। उत्वमिति। तस्य रपरत्वे 'हलि च' इति दीर्घ इत्यपि बोध्यम्। मृषोद्यमिति। क्यपि 'वचिस्वपि—' इति संप्रसारणम्। रोचतेरिति। रुचधातोः क्यपि रुच्य इति रूपमित्यर्थः। गुपेरिति। गुप्धातोः क्यप् प्रकृतेरादिवर्णस्य ककारश्च संज्ञायां निपात्यते इत्यर्थः। सुवर्णरजतभिन्नं धनं कुप्यमिति ज्ञेयम्। तथा च 'हेमरूप्ये कृताकृते' इत्युक्त्वा अमर आह 'ताभ्यां यदन्यत्तत्कुप्यम्' इति। कृष्ट इति। कृष्टप्रदेशे ये स्वयं पच्यन्ते फलन्ति ते कृष्टपच्या इत्यर्थः। कर्मकर्तरीति। अत्र कर्मकर्तरि क्यबित्यर्थः। निपातनादिति भावः। शुद्धे त्विति। मुख्यकर्मणि तु ण्यति उपधावृद्धौ 'चजोः' इति कुत्वे कृष्टपाक्य इति रूपमित्यर्थः। न व्यथते अव्यथ्य इति। अत्र निपातनात् कर्तरि क्यबिति भावः। भिद्योद्ध्यौ नदे। क्यबिति। नदविशेषे कर्तरि निपात्यते इति शेषः। पुष्यसिध्यौ। निपात्येते इति शेषः, नक्षत्रविशेष गम्ये इत्यर्थः। विपूय।

---

षुञ् अभिषव इत्यस्य ह्रस्वान्तत्वादाह निपातनाद्दीर्घ इति। निपातनं च रूढ्यर्थमपि। तेनाद्यपक्षे अश्वमेधादौ द्वितीयपक्षे ज्योतिष्टोमादौ च नातिप्रसङ्गः। उत्वमिति। तस्य रपरत्वाद् 'हलि च' इति दीर्घ इति भावः। नित्यं क्यबिति। तेन 'वदः सुपि क्यप् च' इति यत्प्रत्ययो नेति भावः। भिद्योद्ध्यौ। क्यबिति। कर्तरीति शेषः। उद्ध्य इति। 'तोयदागम इवोद्ध्यभिद्ययोर्नामधेयसदृशं विचेष्टितम्' इति रघुः। पुष्यसिध्यौ। नक्षत्रे किम्, पोषणं सेधनम्। अधिकरणे ल्युट्। पुष्यसिध्ययोः पर्यायत्वेऽपि स्वरूपपरत्वात्सूत्रे द्वन्द्वः। 'पुष्ये तु सिध्यतिष्यौ' इत्य-

रज्ज्वादिकरणाय शोधयितव्य इत्यर्थः । विनीयः कल्कः । पिष्ट ओषधिविशेष इत्यर्थः । पापमिति वा । जित्यो हलिः । बलेन कृष्टव्य इत्यर्थः । कृष्टसमीकरणार्थं स्थूलकाष्ठं हलिः । अन्यत्तु विपव्यम् विनेयम् जेयम् । २८६९ प्रत्यपिभ्यां ग्रहेः । (३-१-११८) 'छन्दसीति वक्तव्यम्' (वा. १९४४) । प्रतिगृह्यम् । अपिगृह्यम् । लोके तु प्रतिग्राह्यम् अपिग्राह्यम् । २८७० पदास्वैरिबाह्यापक्ष्येषु च ( ३-१-११९ ) अवगृह्यं प्रगृह्यं वा पदम् । अस्वैरी परतन्त्रः । गृह्यकाः शुकाः । पञ्जरादिबन्धनेन परतन्त्रीकृता इत्यर्थः । बाह्यायाम्—ग्रामगृह्या सेना । ग्रामबहिर्भूतेत्यर्थः । स्त्रीलिङ्गनिर्देशात्पुंनपुंसकयोर्न । पक्षे भवः पक्ष्यः । दिगादित्वाद्यत् । आर्यैर्गृह्यते आर्यगृह्यः । तत्पक्षाश्रित इत्यर्थः । २८७१ विभाषा कृवृषोः । ( ३-१-१२० ) क्यप्स्यात् । कृत्यम् । वृष्यम् । पक्षे--२८७२ ऋहलोर्ण्यत् । ( ३-१-१२४ ) ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत्स्यात् ।

---

विपूय, विनीय, जित्य एते यथाक्रमं मुञ्जकल्कहलिषु क्यवन्ता निपात्यन्ते । तदाह पूङित्यादिना । न्यादिसाहचर्यात् भौवादिकस्यैव पूधातोर्ग्रहणमिति भावः । कल्कः शोधकद्रव्यम् । पापमिति वेति । कल्कशब्दस्य शोधनीये पापेऽपि प्रसिद्धत्वादिति भावः । हलिशब्दस्य विवरणम् कृष्टसमीकरणार्थमिति । प्रत्यपिभ्यां ग्रहेः । छन्दसीति । वार्तिकमिदम् । वृत्तिकृता तु सूत्रे पक्षिप्तम् । ननु छान्दसस्य किमर्थमिहोपन्यास इत्यत आह लोके त्विति । पदास्वैरिबाह्यापक्ष्येषु च । पद, अस्वैरि, बाह्या, पक्ष्य एष्वर्थेषु ग्रहेः क्यबित्यर्थः । अवगृह्यं प्रगृह्यं वा पदमिति । समस्तपदस्य अवान्तरपदविच्छेदः अवग्रहः । 'अप्रावेत्यादिपदमितिशिरस्कं प्रग्रहः' इति प्रातिशाख्ये प्रसिद्धम् । 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति सूत्रोदाहरणं च प्रगृह्यम् । विभाषा कृवृषोः । पञ्चम्यथ षष्ठी । कृञः ऋदन्तत्वाद् नित्यं ण्यति प्राप्ते, वृषेः ऋदुपधत्वाद् नित्यं क्यपि प्राप्ते च, क्यब्विकल्पोऽयम् । पक्षे इति । क्यबभावपक्षे विशेषो वक्ष्यते इत्यर्थः । ऋहलोर्ण्यत् । पञ्चम्यर्थे षष्ठी । तदाह ऋवर्णान्तादिति । युग्यं च

---

मरः । पापमिति वेति । 'तपो न कल्कोऽध्ययनं न कल्कः' इत्युपक्रम्य 'तान्येव भावोपहतानि कल्कः' इति भारते दर्शनात् 'कल्कः पापाशये पापे दम्भे विट्किट्टयोरपि' इति कोशाच्चेति भावः । वक्तव्यमिति । वृत्तिकृता तु सूत्रे प्रक्षिप्तम् । क्यप उदाहरणं तु छन्दस्येव । मत्तस्य न प्रतिगृह्यं तस्मान्नापि गृह्यम् । लोके त्विति । ण्यदेवेति भावः । पदास्वैरि । एष्वर्थेषु ग्रहेः क्यप् स्यात् । अवगृह्यमिति । यस्य पदस्यावग्रहः क्रियते तत्पदम् । अवग्रहो विच्छेदः । अवान्तरपदसंज्ञां सूचयितुं पदपाठकाले किंचित्कालमवसानम् । प्रगृह्यमिति । यस्य प्रग्रहस्तत्पदम् । प्रग्रहस्तु प्रकृतिभावाद्यणाद्यभावे परस्परमचोरसन्निकर्षः । यस्य प्रगृह्यसंज्ञा विहिता तत्प्रगृह्यमिति वृत्तिः । यद्यपि पदावयस्य द्विवचनादेः प्रगृह्यसंज्ञा न तु पदस्य तथाप्यवयवधर्मस्य समुदाये उपचारो बोध्यः । अवगृह्यप्रगृह्यशब्दौ प्रातिशाख्यादिषु पदविशेषपरतया निरूढौ । अस्वैरीति । स्वेन ईरितुं शीलमस्य स्वैरी स्वतन्त्रः । 'स्वादीरेरिणोः' इति

कार्यम् । वर्ष्यम् । २८७३ युग्यं च पत्रे । ( ३—१—१२१ ) पत्रं वाहनम् । युग्यो गौः । अत्र क्यप्कुत्वं च निपात्यते । २८७४ अमावस्यदन्यतरस्याम् । (३—१—१२२) अमोपपदाद्वसेरधिकरणे ण्यत् । वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते । अमा सह वसतोऽस्यां चन्द्रार्कावमावास्या, अमावस्या । 'ऋहलोर्ण्यत्' ( सू. २८७२ ) । 'चजोः—' ( सू. २८६३ ) इति कुत्वम् । पाक्यम् । पाणौ सृजेर्ण्यद्वाच्यः' ( वा. १९४६ ) ऋदुपधलक्षणस्य क्यपोऽपवादः । पाणिभ्यां सृज्यते पाणिसर्ग्या रज्जुः । 'समवपूर्वाच्च' ( वा. १९४७ ) समवसर्ग्या । २८७५ न क्वादेः । (७—३—५९) क्वादेर्धातोश्चजोः कुत्वं न । गर्ज्यम् । वार्तिककारस्तु

---

पत्रे । क्यबन्तं निपात्यते । ण्यतोऽपवादः । युग्यो गौरिति । शकटादिना योक्तव्य इत्यर्थः । क्यपि कुत्वं निपातनात् । पत्रं वाहनमिति । पतन्ति गच्छन्त्यनेनेत्यर्थे 'दाम्नीशस—' इत्यादिना करणे ष्ट्रन् । ण्यति तु योग्यमिति स्यात् । अमावस्यव । अधिकरणे इति । निपातनलभ्यमिदम् । अमेत्यस्य विवरणम् सहेति । 'ऋहलोर्ण्यत्' इत्यनुपदमेव प्राक् प्रसङ्गाद् व्याख्यातमपि सूत्रक्रमात् पुनरुपात्तम् । कुत्वमिति पचेर्ण्यति 'चजोः—' इति कुत्वमिति भावः । ननु पाणौ सृजेर्ण्यदिति व्यर्थम्. 'ऋहलोः इत्येव सिद्धेरित्यत आह ऋदुपधलक्षणस्येति । 'ऋदुपधाच्चावलृपिचृतेः' इति ण्यदपवादस्य क्यपो बाधनार्थमित्यर्थः पाणिसर्ग्या रज्जुरिति । ण्यति 'चजोः' इति कुत्वम् । समवपूर्वाच्चेति । वार्तिकमिदम् । सृजेर्ण्यदिति शेषः । न क्वादेः । कुः आदिर्यस्येति विग्रहः । चजोः कु इत्यनुवर्तते, तदाह क्वादेरिति । कवर्गादेरित्यर्थः । वार्तिककारस्त्विति । 'चजोः कु घिण्ण्यतोः' इति सूत्रे 'निष्ठायाम्-

---

वृद्धिः । नञ्पूर्वस्तु अस्वैरी । गुह्यका इति । 'अनुकम्पायाम्' इति कन् । 'गुहासक्ताः पक्षिमृगाश्छकास्ते गुह्यकाश्च ते' इत्यमरः । विभाषा कृ । करोतेः क्यप्यप्राप्ते वृषेस्तु ऋदुपधत्वान्नित्यं प्राप्तेऽयमारम्भः । पत्रं वाहनमिति । पतत्यनेनेत्यर्थे 'दाम्नीशस—' इत्यादिना करणे ष्ट्रन् । युग्यो गौरिति । यद्यपि 'तद्वहति रथयुगप्रासङ्गम्' इति तद्धितयताऽपि इदं सिध्यति तथापि ण्यतं व्यावर्तयितुमिदं सूत्रम् । अन्यथा हि योग्यो गौरिति स्यात् । अन्ये त्वाहुः—युग्यो हस्तीति हि वृत्तावुदाहृतं तत्तु तद्धितेन न सिध्यति । न हि हस्ती युगं वहति । कृता तु सिध्यति । युज्यते संबध्यते ह्यसौ कुथादिनेति, ततश्चात्र वैयर्थ्यशङ्कैव नास्तीति दिक् । वृद्धौ सत्यामिति । तेन 'अमावास्या वा' इति विहितस्तद्धितो ह्रस्वपक्षेऽपि सिध्यति एकदेशविकृतस्यानन्यत्वात् । यदि तु यत्प्रत्ययान्तस्येदं पाक्षिकं निपातनमित्याश्रीयेत तदा यता मुक्तेऽधिकरणे ण्यदेव तावद दुर्लभः । अथापि बाहुलकाल्लभ्येत । एवमपि ण्यदन्तमनूद्य विहितस्तद्धितो यदन्तान्न स्यादिति दिक् । ऋहलोः । पञ्चम्यर्थे षष्ठी । ऋ इति ऋधातोर्न ग्रहणं किं तु ऋवर्णस्य, हला साहचर्यात्परं कार्यमिति निर्देशाद् 'ईडवन्द—' इत्यादिलिङ्गाच्च । 'ऋहलोः—' इत्येतदनुवर्तमानस्य धातोर्विशेषणं विशेषणेन तदन्तविधिस्तदेतदाह ऋवर्णान्तादित्यादि । अत्रेदमवधेयम्—मूलपुस्तकेषु सर्वत्र 'विभाषा कृवृषोः' इत्यत्र पक्षे ण्यद् भवतीति वक्तुम् 'ऋहलोर्ण्यत्' इति सूत्रं

'चजोः—' ( सू. २८६३ ) इति सूत्रे 'निष्ठायामनिटः' इति पूरयित्वा 'न क्वादेः' इत्यादि प्रत्याचख्यौ । तेन अर्जितर्जिप्रभृतीनां न कुत्वम् । निष्ठायां सेट्त्वात् । ग्रचुग्लुञ्चुप्रभृतीनां तु क्वादित्वेऽपि कुत्वं स्यादेव । सूत्रमते तु यद्यपि विपरीतं प्राप्तम् । तथापि 'यथोत्तरं मुनीनां प्रामाण्यम्' । २८७६ अजिव्रज्योश्च । ( ७—३—६० ) न कुत्वम् । समाजः । परिव्राजः । २८७७ भुजन्युब्जौ पाण्युपतापयोः । ( ७—३—६१ ) एतयोरेतौ निपातौ । भुज्यते अनेनेति भुजः पाणिः । 'हलश्च' ( सू. ३३०० ) इति घञ् । न्युब्जन्त्यस्मिन्निति न्युब्जः । उपतापो रोगः । पाण्युपतापयोः किम्—भोगः समुद्गः । २८७८ प्रयाजानुयाजौ यज्ञाङ्गे । ( ७–३–६२ ) एतौ निपात्यौ यज्ञाङ्गे । पञ्च प्रयाजाः । त्रयोऽनुयाजाः । यज्ञाङ्गे किम्—प्रयागः अनुयागः । २८७९ वञ्चेर्गतौ । ( ७–३–६३ ) कुत्वं न । वाञ्च्यम् । गतौ किम्—वङ्क्यं काष्ठम् । कुटिलीकृतमित्यर्थः । २८८० ओक उचः के । ( ७–३–६४ ) उचेर्गुणकुत्वे निपात्येते

---

निटः' इति पूरितम् । तथा च निष्ठायां यः अनिट् तद्धात्ववयवयोः चजोः कु स्याद् घिति ण्यति चेत्यर्थः फलति । तथा 'न क्वादेः' इति सूत्रम् 'अजिव्रज्योश्च' इति सूत्रं 'यजयाचरुचप्रवचर्चश्च' इत्यत्र याचरुचग्रहणं च न कर्तव्यमिति प्रत्याचख्यावित्यर्थः । किं तत इत्यत आह तेनेति । सूत्रमते अर्जितर्जिप्रभृतीनां ण्यति कुत्वं स्यात्, न क्वादेः' इति निषेधस्य तत्राप्रवृत्तेरिति भावः । तदेवं सूत्रमते अतिव्याप्तिमुक्त्वा 'अव्याप्तिमाह ग्रुचुग्लुञ्चुप्रभृतीनामिति । तेषां कवर्गादित्वेऽपि ण्यति ग्रोक्यमित्यादौ कुत्वमिष्टं स्यादेव वार्तिकमते 'न क्वादेः' इति निषेधस्य प्रत्याख्यातत्वात् । सूत्रमते तु 'न क्वादेः' इति निषेधात् ग्रोक्यमित्यादौ कुत्वमिष्टं न स्यादित्यव्याप्तिरिति भावः । नन्विदं वार्तिकं विपरीतफलमपि संमतत्वाद् ग्राह्यमेव । विरोधे विकल्पस्य वक्तुं शक्यत्वादिति शङ्कते सूत्रमते तु यद्यपीति । परिहरति तथापीति । यथोत्तरमिति । अयं वैयाकरणसमयः । अजिव्रज्योश्च । इत्यादि स्पष्टम् । वञ्चेर्गतौ । कुत्वं नेति । शेषपूरणमिदम् । 'चजोः कु घिण्ण्यतोः' इत्यतः कुग्रहणस्य 'न क्वादेः' इत्यतो नेत्यस्य चानुवृत्तेरिति

---

पठित्वा पश्चाद् 'युग्यं च पत्रे' 'अमावस्यदन्यतरस्याम्' इति पठितम् । मनोरमायां तु सूत्रपाठक्रमेण 'युग्यं च पत्रे', 'अमावस्यदन्यतरस्याम्' इति व्याख्याय पश्चाद् 'ऋहलोः—' इति सूत्रं व्याख्यातं तथैवात्रापि व्याख्यातमिति । गर्ज्यमिति । गर्ज शब्दे 'ऋहलोः—' इति ण्यति 'चजोः—' इति कुत्वे प्राप्तेऽयं निषेधः । कुत्वं स्यादेवेति । 'उदितो वा' इति क्त्वायामिड्विकल्पाद् 'यस्य विभाषा' इति निष्ठायामनिट्त्वादिति भावः । विपरीतमिति । सूत्रकारमते ग्रचुग्लुञ्चुप्रभृतीनां 'न क्वादेः' इति कुत्वं न भवति, वार्तिककारमते तु निष्ठायामनिट्त्वात् 'चजोः—' इति कुत्वं भवतीति परस्परविरुद्धमित्यर्थः । यथोत्तरमिति । तथा च वार्तिकानुरोधेन कुत्वं स्वीकर्तव्यमिति भावः । समाज इति । अज गतिक्षेपणयोरित्यस्माद्घञि 'चजोः—' इति कुत्वे प्राप्तेऽयं निषेधः । एवं व्रजेरपि । न्युब्ज इति । उब्ज आर्जवे ।

के परे । ओकः शकुन्तवृषलौ । इगुपधलक्षणः कः। घञा सिद्धे अन्तोदात्तार्थमिदम् । २८८१ ण्य आवश्यके । (७-३-६५) कुत्वं न अवश्यपाच्यम् -। २८८२ यजयाचरुचप्रवचर्चश्च । ( ७-३-६६ ) ण्ये कुत्वं न। याज्यम् । याच्यम्। रोच्यम् । प्रवाच्यं ग्रन्थविशेषः । 'ऋच्' अर्च्यम् । ऋदुपधत्वेऽप्यत एव ज्ञापकाण्ण्यत्। 'त्यजेश्च' त्याज्यम् । 'त्यजिपूज्योश्च' इति काशिका। तत्र पूजेर्ग्रहणं चिन्त्यम् । भाष्यानुक्तत्वात् । 'ण्यत्प्रकरणे त्यजेरुपसंख्यानम् । इति हि भाष्यम् २८८३ वचोऽशब्दसंज्ञायाम् । (७-३-६७) वाच्यम् । शब्दाख्यायां तु वाक्यम् । २८८४ प्रयोज्यनियोज्यौ शक्यार्थे । (७-३-६८) प्रयोक्तुं शक्यः प्रयोज्यः, नियोक्तुं शक्यो नियोज्यो भृत्यः । २८८५ भोज्यं

---

भावः । ण्य आवश्यके । कुत्वं नेति। शेषपूरणमिदम्। आवश्यकेऽर्थे यो ण्यः तस्मिन् परे 'चजोः कु घिण्ण्यतोः' इति कुत्वं नेत्यर्थः। यजयाच। ण्ये कुत्वं नेति । शेषपूरणमिदम् । यज, याच, रुच, प्रवच, ऋच एषां द्वन्द्वात् षष्ठी। एषां ण्ये परे 'चजोः कु घिण्ण्यतोः' इति कुत्वं नेत्यर्थः। ननु अर्च्यमित्यत्र कथं ण्यत्। 'ऋदुपधाच्चाक्लृपिचृतेः' इति ऋदुपधत्वलक्षणस्य क्यपो ण्यदपवादत्वादित्यत आह ऋदुपधत्वेऽपीति । त्यजिपूज्योश्चेति । ण्ये कुत्वं नेति शेषः । वचोऽशब्दसंज्ञायाम् । वचधातोर्ण्ये कुत्वं न शब्दसंज्ञां वर्जयित्वेत्यर्थः। वाच्यमिति । वस्त्विति शेषः । अशब्दसंज्ञायामित्यस्य प्रयोजनमाह शब्दाख्यायां तु वाक्यमिति । 'एकतिङ् वाक्यम्' इति संज्ञाशब्दोऽयमिति भावः। प्रवाच्यमित्यत्र तु ग्रन्थविशेषसंज्ञात्वेऽपि नायं कुत्वनिषेधस्य निषेध., 'यजयाच-' इत्यत्र प्रवचेति विशिष्योपादानाद् असंज्ञायामित्यस्य प्रपूर्वाद्वचेरन्यत्र चरितार्थत्वात्। एतदभिप्रायेणैव प्रवाच्यं ग्रन्थविशेष इत्युक्तं प्राक् । प्रयोज्यनियोज्यौ। शक्यार्थे ण्ये कुत्वाभावो निपात्यते। 'शकि लिङ् च' इति कृत्यानां शक्यार्थेऽपि

---

निपूर्वस्यास्य जस्य कुत्वाभावो दस्य च वकारो निपात्यते। घञा सिद्धे इति। उच समवाय इत्यस्माद्घञि 'चजोः—' इति कुत्वे लघूपधगुणे च ओक इति रूपं सिध्यति, परं तु 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वमनिष्टं स्यादिति भावः। ण्य आवश्यके । अवश्यंभाव आवश्यकम् । मनोज्ञादित्वाद् वुञ्। अव्ययानां भमात्रे टिलोपः। अवश्यपाच्यमिति । 'आवश्यकाधमर्ण्ययोर्णिनिः' 'कृत्याश्च' इति ण्यत् । आवश्यकशब्दोऽर्थद्योतनार्थो न तु प्रयोगार्थः । तेनार्थप्रकरणादिगम्येऽपि तस्मिन् ण्यत्कुत्वाभावश्च भवति। यथा 'अशोच्यानन्वशोचस्त्वम्' इति । केचित्तु शोचितुमर्हाः शोच्याः, न शोच्या अशोच्या इति भगवद्गीतास्विदं व्याचक्षते तच्चिन्त्यम्। 'अर्हे कृत्यतृचश्च' इति ण्यति 'चजोः–' कुत्वप्रसङ्गात्। 'चजोः–' इति कुत्वं 'निष्ठायामनिटः' इति वार्तिकमते तु सम्यगेवेति दिक् । यज। यज देवपूजादौ। टुयाचृ याञ्चायाम्। रुच दीप्तौ। प्रपूर्वो वच परिभाषणे। ऋतु स्तुतौ। ग्रन्थविशेष इति। तथा च संज्ञेयमिति 'वचोऽशब्दसंज्ञायाम्' इत्यस्याप्रसङ्गान्निषेधोऽयमिति भावः। ज्ञापकादिति । सरूपत्वाद्वासरूपविधिना ण्यद्भवेदिति न शङ्कनीयमिति भावः।

भक्ष्ये । (७-३-६९) भोग्यमन्यत् । 'ण्यत्प्रकरणे लपिदभिभ्यां चेति वक्तव्यम्' । लाप्यम् । दभिर्धातुष्वपठितोऽपि वार्तिकबलात्स्वीकार्यः । दाभ्यः । २८८६ ओरावश्यके । (३-१-१२५) उवर्णान्ताद्धातोर्ण्यत्स्यादवश्यम्भावे द्योत्ये । लाव्यम् । पाव्यम् । २८८७ आसुयुवपिरपित्रपिचमश्च । (३-१-१२६) 'षुञ्' आसाव्यम् । 'यु मिश्रणे' याव्यम् । वाप्यम् । राप्यम् । त्राप्यम् । आचाम्यम् । २८८८ आनाय्योऽनित्ये । (३-१-१२७) आङ्-पूर्वान्नयतेर्ण्यदायादेशश्च निपात्यते । दक्षिणाग्निविशेष एवेदम् । स हि गार्हपत्या-दानीयतेऽनित्यश्च सततमप्रज्वलनात् । आनेयोऽन्यः घटादिः, वैश्यकुलादानीतो

---

विहितत्वाद् ण्यदन्तस्य शक्यार्थकत्वमपि । भोज्यं भक्ष्ये । भक्ष्ये गम्ये ण्ये भुजेः कुत्वाभावो निपात्यते । इति प्रासङ्गिकम् । अथ प्रकृतम् । लपिदभिभ्यां चेति । वार्तिकमिदम् 'ऋहलोर्ण्यत्' इति सूत्रस्थम् । 'पोरदुपधात्' इति प्राप्तस्य ण्यद-पवादस्य यतोऽपवादः । ओरावश्यके । लाव्यं पाव्यमिति । 'अचो ञ्णिति' इति वृद्धौ 'वान्तो यि-' इत्यवादेशः । आसुयुवपि । आसु, यु, वपि रपि, त्रपि, चम् एषां समाहारद्वन्द्वः । ण्यदिति शेषः । आसाव्यमिति । आङ्पूर्वस्य सुञो ग्रहणमिति भावः । आनाय्योऽनित्ये । अनित्ये इति छेदः । दक्षिणा-ग्निविशेष एवेति । वार्तिकमिदम् । स हीति । दक्षिणाग्निर्हि अग्निहोत्रार्थमहरहः गार्हपत्यादेः प्रणीयत इत्यर्थः, एतेन आङ्पूर्वकस्य नयतेरर्थं उक्तः । अनित्यश्चेति । गार्हपत्यवन्नित्यधारणाभावादिति भावः । तदाह सततमप्रज्वलनादिति । सततं

---

वाक्यमिति । 'तिङ्सुबन्तचयो वाक्यम्' । भोज्यम् । भक्ष्यमिहाभ्यवहार्यमात्रं विवक्षितं न तु खरविशदमभ्यवहार्यम् । तेन भोज्या यवागूरित्यपि भवतीत्याहुः । भोग्यमन्यदिति । पालनीयमुपभोग्यं चेत्यर्थः । लपिदभिभ्यां चेति । 'पोरदु-पधात्' इति प्राप्तस्य यतोऽपवादः । जयादित्यस्तु 'आसुयुवपिरपि-' इति सूत्रे लपिं प्रक्षिप्य रपिलपिचपीति पठित्वाऽनुक्तसमुच्चयार्थेन चकारेण दभेः संग्रह इत्युक्तवान् तत्र वैषम्येण व्याख्यानं निर्बीजं भाष्यविरोधश्च स्पष्ट एवेति बोध्यम् । स्वीकार्यं इति । 'कास्यनेकाच आम्वक्तव्यश्चुलुम्पाद्यर्थम्' इति वर्तिकबलाद्यथा चुलुम्पादिभ्य आम् स्वीक्रियते तद्वदिति भावः । तथा च प्रयुज्यते—'न ता नशन्ति न दभाति तस्करः' 'विष्णुर्गोपा अदाभ्यः' इत्यादि । लाव्यमिति । आवश्यके उपपदे इति व्याख्याने तु नेदं सिध्यतीति भावः । क्वचित्तु लाघवं प्रयत्नादराद् व्यतिसे इत्यादौ व्यतिशब्द-वद् द्योतितार्थस्यापि प्रयोगो दृश्यते । अवश्यलाव्यम् । अत्रोपपदसमासासंभवेऽपि मयूरव्यंसकादेराकृतिगणत्वात्समासः । आसु । षुञ् । आसाव्यमिति । षुञ् अभिषव इत्ययं गृह्यते न तु षु प्रसवैश्वर्ययोरिति । 'कृत्यल्युटो बहुलम्' इति बहुल-ग्रहणादिति भावः । यु मिश्रण इति । युञ् बन्धन इति तु न गृह्यते सानुबन्धक-त्वादिति भावः । 'अत्र युप्रभृतीनां द्वन्द्वं कृत्वा पश्चादासुशब्देन द्वन्द्वः । तेन 'अल्पा-च्तरम्' इति युशब्दस्य न पूर्वनिपातः शङ्क्यः । इहाद्ययोः 'अचो यत्' इत्यनेन रपित्रपिचमां तु 'पोरदुपधात्' इत्यनेन यत्प्रत्यये प्राप्तेऽयमारम्भः । अनित्यमात्रे यदि

दक्षिणाग्निश्च । २८८९ प्रणाय्योऽसंमतौ । (३-१-१२८) संमतिः प्रीतिविषयीभवनं कर्मव्यापारः । तथा भोगेष्वादरोऽपि संमतिः । प्रणाय्यश्चोरः । प्रीत्यनर्हं इत्यर्थः । प्रणाय्योऽन्तेवासी । विरक्त इत्यर्थः । प्रणेयोऽन्यः । २८९० पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु । (३-१-१२९) मीयतेऽनेन पाय्यं मानम् । ण्यत् धात्वादेः पत्वं च । 'अतो युक्-' (सू० २७६१) इति युक् । सम्यङ् नीयते होमार्थमग्निं प्रतीति सान्नाय्यं हविर्विशेषः । ण्यदायादेशः समो दीर्घश्च निपात्यते । निचीयतेऽस्मिन्धान्यादिकं

---

धारणाभावादित्यर्थः । प्रणीतस्य दक्षिणाग्नेस्तत्तत्कर्मणि समाप्ते लौकिकत्वमुक्तं कल्पसूत्रेषु 'अप्रवृत्ते कर्मणि लौकिकं संपद्यते' इति । ततश्च' पुनः पुनः प्रणयनाद् अनित्यत्वं दक्षिणाग्नेरिति बोध्यम् । यद्यप्याहवनीयस्यापि पुनः पुनः प्रणयनमस्ति, तथापि 'दक्षिणाग्निविशेष एव, इति वार्तिकान्नाहवनीयस्य ग्रहणमित्यर्थः । विशेषग्रहाणान्नित्यधारणपक्षे दक्षिणाग्निरिह न गृह्यते इति सूचितम्, गतश्रियां दक्षिणाग्नेरपि नित्यधार्यत्वात् । 'गतश्रियो नित्यधार्या अग्नयः' इति वचनादित्यलं पल्लवितेन । वैश्यकुलादानीत इति । दक्षिणाग्निं प्रकृत्य हि श्रूयते—'अहरहरेवैनं वैश्यकुलादाहरन्' इति । तथाविधदक्षिणाग्नौ वाच्ये आनेयशब्द एवेति भावः । प्रणाय्योऽसंमतौ । असंमतौ गम्यायां प्रणाय्य इति निपात्यते । तत्र असंमतिशब्दैकदेशं संमतिशब्दं विवृणोति संमतिः प्रीतिविषयीभवनमिति । तच्च कर्मनिष्ठमित्याह कर्मव्यापार इति । तथेति । भोगेषु सुखदुःखानुभवेषु आसक्तिरपि संमतिरित्यर्थः । एवंविधा संमतिर्न भवतीति असंमतिरिति फलितम् । प्रणाय्यश्चोर इति । ण्यति वृद्धौ आयादेशः । पाय्यसांनाय्य । पाय्य, सांनाय्य, निकाय्य, धाय्य एषां द्वन्द्वात्प्रथमाबहुवचनम् । मान, हविः, निवास, सामिधेनी एषां द्वन्द्वात्सप्तमी । मानादिषु गम्येषु क्रमात् पाय्यादयो निपात्यन्ते । मीयते अनेनेति । माधातोः करणे ण्यत्, धात्वादेर्मकारस्य पत्वं च निपात्यते इत्यर्थः । आत इति । ण्यति 'मीनाति-' इत्यात्वे कृते, आतो युगिति भावः । ण्यदिति । संपूर्वाद् नीधातोः कर्मणि निपात्यत इत्यर्थः । आयादेश इति । सन्नी य इति स्थिते आयादेशो निपात्यते इत्यन्वयः ।

---

प्रयोगस्तर्हि घटादावतिप्रसङ्ग इत्यत आह दक्षिणाग्निविशेष इत्यादि । वैश्यकुलादेरिति । दक्षिणाग्नेर्हि योनिर्विकल्प्यते वैश्यकुलाद्वित्तावतो भ्राष्ट्राद्वा गार्हपत्याद्वेति । कर्मव्यापार इति । तथा चायमर्थः—लोकानां या प्रीतिस्तद्विषयीभवनं यस्मिन्नास्ति चोरादौ सोऽसंमतिरिति । वस्तुतस्तु प्रीतिविषयीभवनापेक्षया लाघवात्प्रीतिरेव संमतिः सा यस्मिन् चोरादौ नास्ति लोकानां सोऽसंमतिः । यद्वा संमतिः प्रीतिविषयेषु यस्य नास्ति स विरक्तोऽसंमतिः । तन्त्रेणार्थद्वयमपि गृह्यते । पाय्यसान्नाय्य । चतुर्षु अर्थेषु चत्वारो निपात्यन्ते । पीयतेऽनेनेति माङः करणे ण्यत् । मेयमन्यत् हविर्विशेष इति । 'ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायाम्' इति विहितो दधिपयोरूपः । धीयते अनयेति । अत्र सर्वा सामिधेनी न ग्राह्या किं तु समिध्यमानवती समिद्धवती चान्तरेण विकृतिषु प्रक्षिप्यमाणा 'पृथुपाजा

निकाय्यो निवासः । अधिकरणे ण्यत् आय् धात्वादेः कुत्वं च निपात्यते । धीयतेऽनया समिदिति धाय्या ऋक् । २८९१ क्रतौ कुण्डपाय्यसञ्चाय्यौ । (३-१-१३०) कुण्डेन पीयतेऽस्मिन्सोमः कुण्डपाय्यः क्रतुः । सञ्चीयतेऽसौ सञ्चाय्यः । २८९२ अग्नौ परिचाय्योपचाय्यसमूह्याः । (३-१-१३१) अग्निधारणार्थे स्थलविशेष एते साधवः । अन्यत्र तु परिचेयम् उपचेयम्

---

निवास इति । कुसूलादिरित्यर्थः । अधिकरणे इति । चिञ्धातोरधिकरणे ण्यन्निपात्यते इत्यन्वयः । आय् इति । अच्परकत्वाभावाद् आयादेशोऽप्राप्तो निपात्यते इत्यन्वयः । धाय्या ऋगिति । धाधातोः करणे ण्यति आयादेशो निपात्यते इति भावः । सामिधेन्यो नाम समिदाधानार्था ऋग्विशेषाः । तत्र 'समिध्यमानो अध्वरे' इति ऋच उपरि प्रक्षेप्या 'पृथुपाजा अमर्त्यः' इत्याद्या ऋक्प्रसिद्धा । क्रतौ कुण्डपाय्य । क्रतुविशेषे गम्ये एतौ निपात्येते । कुण्डेनेति । अत्सरुकैः चमसैरित्यर्थः । सामान्येनैकवचनम् 'यदत्सरुकैश्चमसैर्भक्षयन्ति तदेषां कुण्डम्' इति श्रुतिः । कुण्डपाय्य इति । सत्रविशेषात्मकः क्रतुः । कुण्डेनेति तृतीयान्ते उपपदे अधिकरणे ण्यत् । आतो युक् । संचाय्य इति । संपूर्वात् चिञः कर्मणि ण्यत् आयादेशश्च निपात्यते इति भावः । संचाय्यो नाम क्रतुविशेषः क्वचिच्छाखायामन्वेषणीयः । अग्नौ परिचाय्य । अग्नौ गम्ये परिचाय्य उपचाय्य, समूह्य एते निपात्यन्ते । अग्निशब्द इष्टकारचितस्थण्डिलविशेषे वर्तते, 'इष्टकाभिरग्निं चिनोति' इति श्रुतेः । इष्टकाकृतचयनेन अग्न्याख्यं स्थण्डिलं निष्पादयेदित्यर्थः । 'ब्रह्मवादिनो वदन्ति यन्मृदा चाद्भिश्चाग्निश्चीयतेऽथ कस्मादग्निरुच्यत इति यच्छन्दोभिश्चिनोत्यग्नयो वै छन्दाँसि तस्मादग्निरुच्यतेऽथो इयं वा अग्निर्वैश्वानरो यन्मृदा चिनोति तस्मादग्निरुच्यते' इति वाक्यशेषाच्च, तदाह अग्निधारणेति । तत्र परिपूर्वादुपपूर्वाच्च चिञः कर्मणि ण्यत् आयादेशश्च निपात्यते । संपूर्वस्य वहेस्तु कर्मणि ण्यति संप्रसारणम्, दीर्घश्च निपात्यते । 'समूह्यं चिन्वीत पशुकामः परिचाय्यं चिन्वीत ग्रामकामः' इति तैत्तिरीयश्रुतौ परिचाय्यसमूह्यौ प्रसिद्धौ । उपचाय्यस्त्वग्निः क्वचि-

---

अमर्त्यः' इत्यादिकैव । अयं च विशेषो निपातनस्य रूढ्यर्थत्वाल्लभ्यते । नन्वेवं निपातनात्सामिधेनीविशेषवाचकत्वे सामिधेनीग्रहणं व्यर्थमिति चेत् । अत्राहुः—सूत्रे सामिधेनीग्रहणं प्रयोगविशेषोपलक्षणार्थम् । तथा चासामिधेन्यामपि दृश्यते 'धाय्यां शंसति' इति । न हि शस्त्रेण समित् प्रक्षिप्यते । क्रतौ कुण्डपाय्य । कुण्डशब्दे तृतीयान्ते उपपदे पिबतेरधिकरणे यत्प्रत्ययो युगागमश्च निपात्यते । नन्वत्र ण्यदेव निपात्यतां प्रकृतत्वात् । एवं च 'अतो युक् चिण्कृतोः' इति सिद्धत्वाद् युक् च न निपातनीय इति लाघवमस्तीति चेत् । मैवम् । तित्स्वरप्रसङ्गात् । इष्यते तु 'यतोऽनावः' इत्याद्युदात्तः कृदुत्तरपदप्रकृतिस्वरः । तथा च प्रयुज्यते । प्रणाय्यात् कुण्डपाय्य इति । संपूर्वाच्चिनोतेस्तु ण्यदायौ निपात्येते । क्रतौ किम्, कुण्डपानम् । संचेयम् । अग्नौ परि । अग्निरिह न ज्वलनः किं तु तद्धारणार्थमिष्टकाचयनेन विर्मितं स्थलं तदाह स्थलविशेष इति । एते साधव इति । स्थलविशेषेऽभि-

संवाह्यम् । २८९३ चित्याग्निचित्ये च । (३-१-१३२) चीयतेऽसौ चित्योऽग्निः । अग्नेश्चयनमग्निचित्या । 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' (सू. २८१७) त्वया गन्तव्यम् गमनीयम् गम्यम् । इह लोटा बाधा मा भूदिति पुनः कृत्यविधिः 'स्त्र्यधिकारादूर्ध्वं वासरूपविधिः क्वचिन्न' इति ज्ञापयति । तेन 'क्तल्युट्तुमुन्खलर्थेषु न–' इति सिद्धम् । 'अर्हे कृत्यतृचश्च' (सू. २८२२) । स्तोतुमर्हः स्तुत्यः स्तुतिकर्म । स्तोता स्तुतिकर्ता । लिङा बाधा मा भूदिति कृत्यतृचोर्विधिः ।

---

च्छाखायामन्वेषणीयः । चित्याग्निचित्ये च । चित्यश्च अग्निचित्या चेति द्वन्द्वः। अग्नौ निपात्येते । चित्योऽग्निरिति । कर्मणि ण्यत् तुक् च निपात्यते । अग्नेश्चयनमिति । अग्निशब्दे षष्ठ्यन्ते उपपदे चिणो ण्यत् तुक् च स्त्रीत्वं लोकात् । 'प्रैषातिसर्ग–' इति व्याख्यातमपि स्मार्यते । गम्यमिति । 'पोरदुपधात्' इति ण्यदपवादः क्यप् । ननु सामान्येन भावकर्मणोर्विहितानां कृत्यानां प्रैषादिषु तदभावे च सिद्धेः प्रैषादिषु कृत्यविधिर्व्यर्थ इत्यत आह लोटा बाधा इति । इह प्रैषादिषु कृत्यविध्यभावे लोट् चेति प्रैषादिषु लोटा विशेषविहितेन कृत्यानां बाधः स्यात्, कृत्यानां प्रैषाद्यभावे भावकर्मणोश्चरितार्थत्वात् । अतः प्रैषादिषु कृत्यानां लोटा बाधनिवृत्तये पुनः कृत्यविधिरित्यर्थः । ननु वासरूपविधिनैव लोटा प्रैषादिषु कृत्यानां बाधो न भविष्यतीत्यत आह स्त्र्यधिकारादूर्ध्वमिति 'स्त्रियां क्तिन्' इत्यत ऊर्ध्वमित्यर्थः । 'प्राक् स्त्रियाः वासरूपविधिः' इति भाष्यम् । ननु स्त्र्यधिकारादूर्ध्वं वासरूपविधेरप्रवृत्तौ 'स्त्रियां क्तिन्' इति सामान्यविहितस्य क्तिनः 'षिद्भिदादिभ्योऽङ्' इति विशेषविहितस्य नित्यबाधः स्यात्, ततः क्षमा क्षान्तिः, भिदा भित्तिरित्यादि न स्यादित्यत आह क्वचिन्नेति । क्वचिदित्यस्यानिर्धारणादाह तेन क्तल्युट्तुमुन्खलर्थेषु नेति । सिद्धमिति । एषु वासरूपविधिर्नास्तीत्यर्थः । 'स्त्र्यधिकारात् प्राग् वासरूपविधिः, न तु तत ऊर्ध्वम्' इति भाष्यस्य क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्तीत्यत्र संकोच इति भावः । अत्र व्याख्यानमेव शरणम् । अर्हे कृत्यतृचश्चेति । प्राग्व्याख्यातेति विशेषविवक्षया स्मार्यते । 'लिङ्यदि' इत्यतो लिङ्नुकर्षार्थश्चकार इत्युक्तं प्राक् । ननु अर्हे अनर्हे च सामान्यविधानादेव अर्हेऽपि कृत्यतृचोः

---

धेये परिपूर्वाच्चिनोतेः ण्यदायादेशयोः संपूर्वस्य वदेस्तु संप्रसारणदीर्घयोश्च निपातनादिति भावः । चित्योऽग्निरिति । चिनोतेः कर्मणि क्यप् । यतोऽपवादः । इह सूत्रे अग्नावित्यनुवर्तते तच्च चित्यशब्दस्यैव विशेषणं न द्वितीयस्य । तस्य भावार्थकत्वेनाग्निवाचकत्वासंभवात् । अग्नेरन्यत्र चेयमित्येव । शब्दकौस्तुभादौ तु अग्निचित्येत्यत्र भावे यकारप्रत्ययस्तुक् च निपात्यते न तु क्यप् । तेनान्तोदात्तत्वं भवति । क्यपि तु कृते क्यपः पित्त्वादनुदात्तत्वे धातुस्वरेण चित्य इवाद्युदात्तः स्यादिति स्थितम् । ननु वासरूपविधिना कृत्या अपि भविष्यन्तीत्यत आह स्त्र्यधिकारादूर्ध्वमित्यादि । क्तल्युडिति । हसितं हसनं छात्रस्य । 'नपुंसके भावे क्तः' 'ल्युट् च' इत्यनयोर्विषये भावे इति घञ् । इच्छति भोक्तुम् । अत्र 'इच्छार्थेषु लिङ्लोटौ' इति लोण्न । लिङ् तु भवत्येव । 'समानकर्तृकेषु तुमुन्' 'लिङ् च' इति वचनात् । ईष-

२८९४ भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा । (३—४—६८)
एते कृत्यान्ताः कर्तरि वा निपात्यन्ते । पक्षे तयोरेवेति सकर्मकात्कर्मणि, अकर्मकात्तु भावे ज्ञेयाः । भवतीति भव्यः । भव्यमनेन वा । गायतीति गेयः साम्नामयम् । गेयं सामानेन वा इत्यादि । 'शकि लिङ् च' (सू. २८२३) ।

---

सिद्धयोः पुनस्तद्विधिर्व्यर्थः, इत्यत आह लिङा बाधेति । अर्हे चेत्येतावत्येव उक्ते चकारानुकृष्टस्य लिङ एवार्हे विधिः स्यात् । तथा च अर्हे कृत्यतृचोर्विधिर्न स्यात्, अर्हे विशेषविहितेन लिङा बाधात्, अनर्हे कृत्यतृचोश्चरितार्थत्वात् । वासरूपविधिस्तु स्त्र्यधिकारादूर्ध्वं न प्रवर्तते इत्युक्तमेव । अतो लिङा बाधा मा भदिति कृत्यतृचोर्विधिरित्यर्थः । भव्यगेय । कर्तरि वेति । 'कर्तरि कृत्' इत्यतः कर्तृरीत्यनुवृत्तं वेत्यनेन संवध्यते । तथा च कर्तरि वा एते निपात्यन्ते । अन्यत्र नेति फलति । तत्र अन्यत्रेत्यस्यानिर्धारणादाह पक्षे इति । अन्यत्रापि न सर्वत्र, किंतु 'तयोरेव कृत्यक्तखलर्थाः' इति सूत्रेण सकर्मकात् कर्मणि अकर्मकाद्भावे एते कृत्या ज्ञेया इत्यर्थः । 'तयोरेव कृत्य–' इति सूत्रे 'लः कर्मणि च' इत्यस्मात्सकर्मकेभ्यः कर्मणि अकर्मकेभ्यो भावे इत्यनुवर्तते इति भावः । भवतीति भव्य इति । कर्तरि अचो यत् । भव्यमनेन वेति । भावे यत् । गेयः साम्नामयमिति । गाधातोः कर्तरि यत् । 'ईद्यति' इति प्रकृतेः ईत्त्वम् । गुणः । साम्नां कर्मणामनभिहितत्वात् कृद्योगे षष्ठी । कर्तुरभिहितत्वात् प्रथमा । गेयं सामानेनेति । कर्मणि यत् सकर्मकत्वात् । न तु भावे । कर्तुरनभिहितत्वात्तृतीया । कृद्योगषष्ठी तु कृत्ययोगे कर्तरि वैकल्पिकी, 'कृत्यानां कर्तरि वा' इत्युक्तेः । इत्यादीति । प्रवचनीयो गुरुर्वेदस्य । प्रवक्तेत्यर्थः । कर्तरि अनीयर् । प्रवचनीयो वेदो गुरुणेति वा । उपस्थानीयः शिष्यो गुरोः, उपस्थानीयो गुरुः शिष्येणेति वा । जन्योऽसौ । जायते इत्यर्थः । जन्यमनेनेति वा । आप्लवतेऽसौ आप्लाव्यः । 'ओरावश्यके' इति कर्तरि ण्यत् । आप्लाव्यमनेनेति वा । आपतत्यसौ आपात्यः । 'ऋहलोः–' इति कर्तरि ण्यत् । आपात्यमनेन वा । शकि लिङ् च' इत्यपि व्याख्यातं प्राक् । विशेषविवक्षया सूत्रक्रमादिहोपन्यस्तम् । नन्विह चकारानुकृष्टकृत्यविधिर्व्यर्थः । शक्तौ अशक्तौ च भावकर्मणोः सामा-

---

त्पानः । 'आतो युच्' इति युच् । अत्र 'ईषद्दुःसुषु–' इति खल् न । लिङा बाधेति । चकारेण 'लिङ् यदि' इत्यतो लिङनुकृष्यत इति भावः । भव्य । 'तयोरेव–' इति नियमात्कर्तर्यप्राप्ते वचनम् । साम्नामिति । कर्मणि षष्ठी । इत्यादीति । प्रवक्तीति प्रवचनीयो गुरुः स्वाध्यायस्य । प्रवचनीयो गुरुणा स्वाध्यायः । उपस्थानीयः शिष्यो गुरोः । उपस्थानीयो गुरुः शिष्येण । जायते जन्यः जन्यमनेन वा । आप्लवते आप्लाव्यः । ण्यत् आप्लाव्यमनेन वा । शकि लिङ् चेति । वोढव्य इति । वह प्रापणे इत्यस्मात्तव्यः । हस्य 'हो ढः' इति ढत्वे 'झषस्तथोः–' इति धत्वे 'ष्टुना ष्टुः' इति ष्टुत्वे 'ढो ढे लोपः' 'सहिवहोः–' इत्यवर्णस्यौत्वम् । अत्र

चात्कृत्याः। वोढुं शक्यो वोढव्यः। वहनीयो वाह्यः। लिङा बाधा मा भूदिति कृत्योक्तिः। लाघवादनेनैव ज्ञापनसंभवे प्रैषादिसूत्रे 'कृत्याश्च' इति सुत्यजम्। अर्हे कृत्यतृचोर्ग्रहणं च।

इति कृत्यप्रकरणम्।

---

## अथ पूर्वकृदन्तप्रकरणम् ॥ ६६ ॥

२८९५ ण्वुल्तृचौ। (३-१-१३३) धातोरेतौ स्तः। 'कर्तरि कृत्' (सू. २८३२) इति कर्त्रर्थे। 'युवोरनाकौ (सू. १२४७)। कारकः। कर्ता। वोढुमर्हो वोढा। कारिका। कर्त्री। 'गाङ्कुटा–' (सू. २४६१) इति ङित्त्वम्।

---

न्यतः कृत्यविधित एव शक्तावपि सिद्धेरित्यत आह लिङा बाधेति। 'शकि लिङ्' इत्येतावत्येवोक्ते शक्तौ विशेषविहितेन लिङा कृत्यानां बाधः स्यात्, अशक्तौ कृत्यानां चरितार्थत्वाद् वासरूपविधिस्तु स्त्र्यधिकारादूर्ध्वं नेत्युक्तमेवेति भावः। लाघवादिति। इह चकारमात्रेण वासरूपविधेः स्त्र्यधिकारादूर्ध्वम् अनित्यताज्ञापनं संभवति। अतः 'प्रैषातिसर्ग–' इति सूत्रे कृत्यग्रहणेन 'अर्हे कृत्यतृश्च' इत्यत्र कृत्यतृज्ग्रहणेन च तज्ज्ञापनाश्रयणे गौरवमिति भावः।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां कृत्यप्रकरणं समाप्तम्।

---

अथ कृदन्तप्रकरणम्। ण्वुल्तृचौ। अनयोर्वर्तमानकालादन्यत्र न प्रयोग इति भाष्यम्। वोढुमर्ह इति। 'अर्हे कृत्यतृचश्च' इत्युक्तेरिति भावः। वोढेति। वहेः तृच्यनुदात्तत्वादिडभावे ढत्वधत्वष्टुत्वढलोपेषु 'सहिवहोः–' इत्योत्वम्। कुटि-

---

ढलोपे कर्तव्ये ष्टुत्वमसिद्धमिति न शङ्क्यम्, आश्रयासिद्धत्वात्। बाधा माभूदिति। कृत्यानामिति शेषः। कृत्योक्तिरिति। कृत्यानुकर्षकचकारोक्तिरित्यर्थः। लाघवादिति। इह हि चकारमात्रेण।

इति तत्त्वबोधिन्यां कृत्यप्रकरणं समाप्तम्।

---

ण्वुल्तृचौ। णकारो वृद्ध्यर्थः। लकारो 'लिति' इति स्वरार्थः। तृचश्चकारस्तु 'तुरिष्ठेमेयस्सु', 'तुश्छन्दसि' इत्यादौ सामान्यग्रहणविघातार्थः। 'चितः' इत्यन्तोदात्तार्थस्तु न भवति, 'आद्युदात्तश्च' इत्यनेनैव सिद्धेः। एवं च 'अप्तृन्–' इति सूत्रे तृन्तृचोः पृथग्ग्रहणं विहाय अप्तृस्वसृ इत्येव सुवचमित्येके। अन्ये तु सामान्यग्रहणेऽपि क्वचिद्विशेषस्यैव ग्रहणं भवतीति ज्ञापनार्थम् 'अप्तृन्–' इति सूत्रे तृन्तृचोरुभयोर्ग्रहणम्। तेन कोपधग्रहणेन तद्धितवुग्ग्रहणमित्येतत्सिद्धमित्याहुः। वोढेति।

कुटिता । अञ्णिदित्युक्तेर्न ङित्वम् । कोटकः । 'विज इट्' (सू. २५३६) ।' विजिता । 'हनस्तोऽचिण्णलोः' (सू. २५७४) । घातकः 'आतो युक्–' (स. २७६१) दायकः । 'नोदात्तोपदेशस्य–' (सू. १७६३) इति न वृद्धिः । शमकः । दमकः । अनिटस्तु नियामकः । 'जनिवध्योश्च (सू. २५१२) । जनकः । 'वध हिंसायाम्' वधकः । 'रधिजभोरचि' (सू. २३०२) । रन्धकः । जम्भकः । 'नेट्यलिटि रधेः (सू. २५१६) । रधिता, रद्धा । 'मस्जिनशोः–' (स. २५१७) इति नुम् । मङ्क्ता । नंष्टा, नशिता । 'रभेरशब्लिटोः' (सू. २५८१) रम्भकः । रब्धा । 'लभेश्च' (सू. २५८२) । लम्भकः । लब्धा । 'तीषसह–' (सू २३४०) । एषिता, एष्टा । सहिता, सोढा । दरिद्रातेरालोपः । दरिद्रिता ।

तेत्यत्र लघपधगुणमाशङ्क्याह गाङिति । तर्हि ण्वुलि कोटक इत्यत्रापि गुणो न स्यादित्यत आह अञ्णिदित्युक्तेरिति । विजितेत्यत्र लघूपधगुणमाशङ्क्याह विज इडिति । इति ङित्वमिति शेषः । विजितेति । ङित्वान्न गुणः । अनिटस्त्विति । तस्यानुदात्तोपदेशत्वादिति भावः । जनक इत्यत्रोपधावृद्धिमाशङ्क्य वृद्धिनिषेधं स्मारयति जनिवध्योश्चेति । वध हिंसायामिति । धात्वन्तरं भौवादिकम्, भ्वादेराकृतिगणत्वात् । नत्वयं हन्तेर्वधादेशः । तथा सति 'जनिवध्योश्च' इति वृद्धिनिषेधसूत्रे वधिग्रहणवैयर्थ्याद् वधादेशस्यादन्ततया अल्लोपस्य स्थानिवत्त्वादेव वृद्ध्यभावसिद्धेः । वधक इति । 'जनिवध्योश्च' इति वृद्धिनिषेधः । रन्धकः जम्भक इत्यत्र इदित्त्वाभावादप्राप्ते नुमि तद्विधिं स्मारयति रधिजभोरचीति । रधितेत्यत्र 'रधिजभोः–' इति नुममाशङ्क्याह नेट्यलिटि रधेरिति । रधिता रद्धेति । 'रधादिभ्यश्च' इति वेट् । मस्ज् तृ इति स्थिते आह मस्जिनशोरिति । नुम्विधिरयम् । मङ्क्तेति । मस्ज् तृ इति स्थिते 'मस्जेरन्त्यात् पूर्वो नुम् वाच्यः' इति सकारादुपरिजकारात् । प्राङ् नुम् । मस्न्ज् तृ इति स्थिते 'स्कोः–' इति सलोपः, जस्य कुत्वेन गः, तस्य चर्त्वेन कः, अनुस्वारः, परसवर्णेन ङ इति भावः । नंष्टा, नशितेति । रधादित्वाद्वेट् । इडभावपक्षे 'मस्जिनशोः–' इति नुमि नन्श् तृ इति स्थिते 'व्रश्च–' इति शस्य षः । नस्यानुस्वारः । ष्टुत्वम् । रभेरशब्लिटोरिति । नुम्विधिरयम् । लब्धेति । 'झषस्तथो–' इति तस्य धः, जश्त्वेन भस्य बः, तीषसहेति । इड्विकल्पोऽयम् । सोढेति । ढत्वधत्वष्टुत्वढलोपाः । 'सहिवहोः–' इत्योत्त्वम् । दरिद्रातेरालोप इति । 'दरिद्रा-

'अर्हे कृत्यतृचश्च' इति तृच्, ढत्वादयस्तु वोढव्य इत्यत्रेवात्राप्यूह्याः । रधितेति । 'रधादिभ्यश्च' इति वेट् । रद्धेति । इह 'नेट्यलिटि–' इति निषेधाप्रवृत्तावपि 'रधि–' इत्यनेन अच्परत्वाभावान्नुम्न । मङ्क्तेति । टुमस्जो शुद्धौ । अस्मात् तृच् 'मस्जि–' इति नुम् अन्त्यात्पूर्वः । 'स्कोः–' इति सलोपः । जस्य कुत्वे चर्त्वम् । अनुस्वारपरसवर्णौ । 'बहूनां समवाये द्वयोर्द्वयोः संयोगः' इति पक्षे तु नुमागमस्याच्परत्वेऽपि 'स्कोः–' इति सलोपो भवत्येवेति ज्ञेयम् । नंष्टेति । रधादित्वादिडभावपक्षे नुम् । लब्धेति । 'झषस्तथोः–' इति धः, भकारस्य जश्त्वम् । 'लभेश्च' इति नुम् तु न

'ण्वुलि न'। दरिद्रायकः। 'कृत्यल्युटः–' (सू. २८४१) इत्येव सूत्रमस्तु। यत्र विहितास्ततोऽन्यत्रापि स्युरित्यर्थात्। एवं च बहुलग्रहणं योगविभागेन कृन्मात्रस्यार्थव्यभिचारार्थम्। पादाभ्यां ह्रियते पादहारकः। कर्मणि ण्वुल्। क्रमेः कर्तर्यात्मनेपदविषयात्कृत इण्निषेधो वाच्यः' (वा. ४४२२–४४२३)। प्रक्रन्ता। कर्तरि इति किम्–प्रक्रमितव्यम्। आत्मनेपद इति किम्–संक्रमिता। अनन्यभावे विषयशब्दः। तेन 'अनुपसर्गाद्वा' (सू. २७१६) इति विकल्पार्हस्य न निषेधः। क्रमिता। तदर्हत्वमेव तद्विषयत्वम्। तेन क्रन्तेत्यपीति केचित्। गमेरिट्––' (सू. २४०१) इत्यत्र परस्मैपदग्रहणं तङानयोरभावं लक्षयति। संजिगमिषिता। एवं 'न वृद्भ्यश्चतुर्भ्यः' (२३४८)। विवृत्सिता। यङन्ता-

---

तेरालोपो वक्तव्यः–' इत्यनेनेति भावः। ण्वुलि नेति। 'दरिद्रातेर्ण्वुलि आल्लोपो नेत्यर्थः। 'न दरिद्रायके लोपः' इति वार्तिकादिति भावः। दरिद्रायक इति। 'आतो युक्' इति भावः। पादाभ्यां ह्रियते पादहारक इत्यत्र कर्मणि ण्वुलं साधयितुमाह कृत्यल्युट इत्येवेति। 'कृत्यल्युटः' इत्येतावतैव पुनर्वचनबलाद् येष्वर्थेषु ते कृत्यल्युटो विहिताः, ततोऽन्येष्वप्यर्थेषु भवन्तीत्यर्थलाभाद् बहुलग्रहणं योगविभागार्थम्, कृत्प्रत्यया येष्वर्थेषु विहिताः ततोऽन्यत्रापि क्वचिद् भवन्तीति। एवं च कर्मण्यपि ण्वुल् सिध्यतीत्यर्थः। 'कृतो बहुलम्' इति वार्तिकं तु एतद्योगविभागसिद्धकथनपरमिति भावः। क्रमेरिति। आत्मनेपदविषयात् क्रमेः परस्य कर्तरि कृतो नेडित्यर्थः। 'स्नुक्रमोः–' इति सूत्रस्थमिदं वार्तिकम् प्रक्रन्तेति। 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदविषयोऽयम्। नन्वेवं सति क्रमितेत्यत्र कथमिडित्यत आह––अनन्यभावे विषयशब्द इति। वर्तते इति शेषः। आत्मनेपदाविनाभाव इति यावत्। क्रमेः कर्तर्यात्मनेपदिन इति फलितम्। तेनेति। क्रमितेत्यत्र क्रमेः 'अनुपसर्गाद्वा' इत्यात्मनेपदविकल्पविधानाद् नित्यमात्मनेपदित्वाभावाद् इण्निषेधो नेत्यर्थः। मतान्तरमाह––तदर्हत्वमेवेति। आत्मनेपदार्हत्वमेवात्मनेपदविषयत्वम्। ततश्च आत्मनेपदपक्षे इण्निषेधे सति क्रन्तेति रूपम्। आत्मनेपदाभावपक्षे तु क्रम इटि क्रमितेति रूपमिति केचिदाहुरित्यर्थः। अत्र पक्षे विषयपदस्य न प्रयोजनमित्यस्वरसः। ननु संजिगमिषितेत्यत्र सनः कथमिट्, गमेरनिट्त्सु पाठात् सनः परस्मैपदपरत्वाभावेन 'गमेरिट् परस्मैपदेषु' इत्यस्याप्रवृत्तेरित्यत आह गमेरिडित्यत्रेति। एवमिति। 'न वृद्भ्यश्चतुर्भ्यः, इत्यत्रापि परस्मैपदग्रहणमनुवृत्तं तङानयोरभावं लक्षयतीत्यर्थः। विवृत्सितेति। वृतेः सनि रूपम्। 'हलन्ताच्च' इति

---

भवति, अचीत्यनुवर्तनात्। ण्वुलि नेति। 'सनि ण्वुलि ल्युटि च न' इति वचनात्। योगविभागेनेति। 'कृत्यल्युटो बहुलम्' इति सूत्रे कृतो बहुलमित्येवाकरे स्थितम्। तथा च योगविभागं विनैव सर्वेष्टसिद्धिरित्याहुः। प्रक्रन्तेति। 'प्रोपाभ्यां समर्थाभ्याम्, इति क्रमेरात्मनेपदविषयता। अनन्यभावे विषयशब्द इति। तदन्याविषयत्वे सति तद्विषयत्वमनन्यभावः। तथा च विकल्पार्हस्य क्रमेः परस्मैपदात्मनेपदोभयप्राप्तिविषयत्वान्निषेधो नेति भावः। संजिगमिषितेति। संपूर्वाद्गमेः

ण्वुल् । अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । पापचकः । यङ्लुगन्तात्तु पापाचकः ।

२८९६ नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः । (३-१-१३४) नन्द्यादेर्ल्युः ग्रह्यादेर्णिनिः पचादेरच् स्यात् । नन्दयतीति नन्दनः । जनमर्दयतीति जनार्दनः । मधुं सूदयतीति मधुसूदनः । विशेषेण भीषयते इति विभीषणः । लवणः । नन्द्यादिगणे निपातनाण्णत्वम् । ग्राही स्थायी । मन्त्री । विशयी । वृद्ध्यभावो निपातनात् । विषयी । इह षत्वमपि । परिभावी, परिभवी । पाक्षिको

---

कित्त्वान्न गुणः यङन्तादिति । पचिधातोर्यङन्तात् पापच्येत्यस्माद् ण्वुलित्यर्थः । तस्य अकादेशे 'यस्य हलः' इति यकारलोपे अतो लोपे पापच् अक इति स्थिते उपधावृद्धिमाशङ्क्याह स्थानिवत्त्वान्न वृद्धिरिति । यङ्लुगन्तात्त्विति । यङः संघातस्य लुकः अजादेशत्वाभावेन स्थानिवत्त्वासंभवादुपधावृद्धिर्निर्बाधा । 'न धातुलोप-' इति निषेधस्तु न, यङ्लुकः अनैमित्तिकत्वाद् उपधावृद्धेरिग्लक्षणत्वाभावाच्च । नन्दिग्रहि । नन्दि, ग्रहि, पच एषां द्वन्द्वः । नन्दिग्रहिपचाः आदिर्येषामिति विग्रहः । आदिशब्दस्य प्रत्येकमन्वयः फलति । ल्यु, णिनि, अच् एषां द्वन्द्वात् प्रथमा । यथासंख्यमन्वयः । तदाह नन्द्यादेरित्यादि । नन्दि इति ण्यन्तग्रहणम् । तदाह नन्दयतीति नन्दन इति । ल्योरनादेशः, 'णेरनिटि' इति णिलोपः । मधुं सूदयतीति । मधुरसुरविशेषः तं सूदयति हन्तीति मधुसूदनः । ल्युः अनादेशः णिलोपः । 'सात्पदाद्योः' इति न षत्वम् । नन्द्यादयो वृत्तौ पठिताः । तत्र केचिद् ण्यन्ताः केचिदण्यन्ताः । सूत्रे 'ग्रह उपादाने' इत्यस्य ग्रहीति इका निर्देशः । सौत्रत्वाद् 'ग्रहिज्या-' इति संप्रसारणं न । ग्राहीति । ग्रहधातोरुपधाण्णिनिः । नकारादिकार उच्चारणार्थः । उपधावृद्धिः । विशयीति । विपूर्वात् 'शीङ् स्वप्ने' इति धातोर्णिनिः । गुणायादेशौ । 'अचोऽञ्णिति' इति वृद्धिमाशङ्क्याह—वृद्ध्यभाव इति । विषयीति । 'षिञ् बन्धने' अस्मात्कृतषत्वाण्णिनिः गुणायादेशौ । नन्विह कथं न वृद्धिः, कथं च षत्वं पदादित्वादित्यत आह—षत्वमपीति । निपातनाद् वृद्ध्यभावः षत्वं चेत्यर्थः ।

---

सन् 'सन्यङो' इति द्वित्वे हलादिःशेषे 'सन्यतः' इत्यभ्यासस्येत्वम् । 'आर्धधातुकस्य-' इति सन इट्, षत्वम्, सन्नन्तात्तृच् पुनरिट् । अल्लोपस्येति । प्राचा तु 'न धातुलोप-' इति सूत्रे इक इत्यनुवृत्तेर्वृद्धेरनिषेधः पापाचक इत्युक्तम्, तन्न । यङन्ते अल्लोपस्य स्थानिवत्त्वेन वृद्धेः प्राप्त्यभावात् । ननु यङ्लुकि पापाचकरूपाभिप्रायेण तथोक्तम् । तत्र हि आकारविशिष्टस्यैव यङो लुगिति सर्वसंमतत्वेन स्थानिवत्त्वाभावादिति चेत् । मैवम् । एवं तर्हि आर्धधातुकस्य धात्ववयवलोपनिमित्तत्वाभावेन यङ्लुगन्ते 'न धातुलोप-' इति निषेधस्य प्रसक्त्यभावात् । नन्दिग्रहि । द्वन्द्वान्ते श्रूयमाण आदिशब्दः प्रत्येकं संबध्यते, तदाह नन्द्यादेर्ल्युरित्यादि । मधुसूदन इति । मधुं दैत्यं सूदयतीति विग्रहः । षूद क्षरणे । इह अर्दिसूदिभ्यां कर्मण्यणि प्राप्ते नन्द्यादिपाठाद् ल्युः । विभीषण इति । 'भियो हेतुभये षुक्' । ग्राहीति । णिनेर्णित्त्वादुपधावृद्धिः । स्थायीति । अतो युक् । मन्त्रीति । मन्त्रीति चुरादावदित्पाठान्नुम्, णेरनिटि' इति लोपः । विषयीति । षिञ् बन्धने 'धात्वादेः षः सः' इति षस्य षत्वे 'आदेशप्रत्य-

वृद्ध्यभावो निपात्यते । पचादिराकृतिगणः । 'शिवशमरिष्टस्य करे' (सू. ३४८९) 'कर्मणि घटोऽठच्' (सू. १८३६) इति सूत्रयोः करोतेर्घटेश्चाच्प्रयोगात्। अच्प्रत्यये परे यङ्लुग्विधानाच्च । केषांचित्पाठस्त्वनुबन्धासञ्जनार्थः । केषांचित्प्रपञ्चार्थः । केषांचिद्बाधकबाधनार्थः । पचतीति पचः । नदट् चोरट् देवट् इत्यादयष्टितः । नदी । चोरी । देवी, दीव्यतेः 'इगुपध—' (सू. २८९७) इति कः प्राप्तः । जारभरा । श्वपचा । अनयोः 'कर्मण्यण्' (सू. २९१३) प्राप्तः । न्यङ्क्वादिषु पाठाच्छ्वपाकोऽपि 'यङोऽचि च' (सू. २६५०) इति गुणवृद्धिनिषेधः । चेक्रियः । नेन्यः । लोलुवः पोपुवः । मरीमृजः । 'चरिचलिप-

---

परिभावी परिभवी इत्यत्र णित्वान्नित्यवृद्धिमाशङ्क्याह—पाक्षिक इति । ग्रह्यादयो वृत्तौ पठिताः । पचादिराकृतिगण इति । पच वप इत्यादिकतिपयधातून् पठित्वा आकृतिगण इति गणपाठे वचनादिति भावः । गणपाठे आकृतिगणत्ववचनाभावेऽप्याह-शिवशमिति । सूत्रे करशब्दस्य पचादिगणोऽपठितस्य कृञः अच्प्रत्ययान्तस्य 'कर्मणि घटः' इति सूत्रे घटेरचि घटशब्दस्य च प्रयोगदर्शनादित्यर्थः । अच्प्रत्यय इति । यङन्तादच्प्रत्यये परे 'यङोऽचि च' इति यङो लुग्विधीयते । नहि पचादिगणे यङन्तं पठितमस्ति । अतोऽपि पचादेराकृतिगणत्वं विज्ञायते इत्यर्थः । पचादेराकृतिगणत्वे नदट् चोरट् इत्यादीनां तत्र पाठो व्यर्थ इत्यत आह केषांचिदिति । टकारानुबन्धासञ्जनार्थ इत्यर्थः । नन्वेवमपि वद चल इत्यादीनां अनुबन्धरहितानां तत्र किमर्थः पाठ इत्यत आह केषांचित्प्रपञ्चार्थ इति । बाधकेति । जारभर श्वपच इत्यादौ पचाद्यजपवादस्य कर्मण्यणो बाधनार्थं भरपचादीनां पाठ इति भाष्यम् । देवः सेव इत्यादौ 'इगुपधज्ञाप्रीकिरः कः' इति विशिष्य विहितस्य कस्य बाधनार्थं च । तदेतदुपपादयति—नदडित्यादि । ननु पचादिगण श्वपचशब्दस्य बाधकबाधनार्थत्वे श्वपाक इति कथमित्यत आह न्यङ्क्वादिषु पाठाच्छ्वपाकोऽपीति । कदाचिदण्प्रत्ययः कुत्वं चेत्यर्थः । चेक्रियः, मरीमृज इत्यादौ प्रक्रियां दर्शयति यङोऽचि चेति । क्रीञादिधातोरचि यङो लुगित्यर्थः । द्वित्वादौ चेक्री अ इत्यादिस्थितौ आह—न धातुलोप इति । चेक्रिय इति । गुणाभावे संयोगपूर्वत्वान्न यण् । नेन्य इति । 'एरनेकाचः—' इति यण् । लोलुव इति । उवङ् । यण्तु न, 'ओः सुपि' इत्युक्तेः । मरीमृज इति । अत्र 'न धातुलोपे—' इति निषेधाद्-

---

ययोः' इति प्राप्तस्य षत्वस्य 'सात्पदाद्योः' इति निषेधादाह इह षत्वमपीति । निपातनादित्यनुषज्यते 'परिनिविभ्यः—' इति सूत्रे सितसयेति क्तान्ताजन्तसिनोतेर्ग्रहणाण्णिन्यन्तसिनोतेर्निपातनं विना षत्वं दुर्लभमिति भावः । जारभरेत्यादि । जारं बिभर्ति, श्वानं पचतीति विग्रहः । श्वपाकोऽपीति । कर्मण्यणपि पक्षे भवतीति भावः । चेक्रिय इति । संयोगपूर्वत्वाद् 'एरनेकाचः—' इति न यण् । लोलुव इति । इह सुबभावाद् 'ओः सुपि' इति यण्नेति 'अचि श्नुधातु—' इत्युवङ् मरीमृज इति । 'रीगृदुपधस्य च' इति रीगागमो हलादिःशेषश्च नेति । सति तु हलादिःशेषे आगमस्य आदेशस्य वा विशेषो नास्तीत्यथवा चाभ्यासस्येत्येव ब्रूयादिति भावः ।

तिवदीनां वा द्वित्वमच्याक्चाभ्यासस्येति वक्तव्यम्' (वा. ३४३०)। आगागमस्य दीर्घत्वसामर्थ्यादभ्यासह्रस्वो 'हलादिः शेषः' (सू. २१७९) च न। चराचरः। चलाचलः। पतापतः। वदावदः। 'हन्तेर्घत्वं च' (वा. ३४३१)। घत्वमभ्यासस्य, उत्तरस्य, तु 'अभ्यासाच्च' (सू. २४३०) इति कुत्वम्। घनाघनः। 'पाटेर्णिलुक्चोक्च दीर्घश्चाभ्यासस्य'। पाटूपटः। पक्षे चरः। चलः। पतः। वदः। हनः। 'रात्रेः कृति—' (सू. १००४) इति वा मुम्। रात्रिञ्चरो रात्रिचरः। २८९७ इगुपधज्ञाप्रीकिरः कः। (३—१—१३५) एभ्यः कः स्यात्। क्षिपः। लिखः। बुधः। कृशः। ज्ञः। प्रीणातीति प्रियः। किरतीति किरः। वासरूपविधिना ण्वुल्तृचावपि। क्षेपकः, क्षेप्ता। २८९८ आतश्चोपसर्गे। (३—१—१३६) कः स्यात्। 'श्याद्व्यध—' (सू. २९०३) इति णस्यापवादः। सुग्लः। प्रज्ञः। २८९९ पाघ्राध्माधेट्दृशः शः।

मृजेर्वृद्धिः। चरिचलीति। एषाम् अच्प्रत्यये परे द्वित्वम्, अभ्यासस्य आगागमेश्चत्यर्थः। ननु चराचर इत्यत्राभ्यासे रेफादाकारस्य ह्रस्वः स्यात्, हलादिशेषेण तत्र रेफस्यापि निवृत्तिः स्यादित्यत आह आगागमस्येति। ह्रस्वत्वे सत्यागागमे दीर्घोच्चारणं व्यर्थम्, अगागमस्यैव विधातुं शक्यत्वात्। तथा हलादिशेषेण रेफस्य निवृत्तौ ह्रस्वत्वेऽपि सवर्णदीर्घेण चाचर इति सिद्धेः। दीर्घोच्चारणं हलादिशेषाभावं गमयतीत्यर्थः। हन्तेरिति। वार्तिकमिदम्। हनधातोरचि घत्वं द्वित्वम् आक् चेत्यर्थः। ननु उत्तरखण्डे 'अभ्यासाच्च' इति कुत्वसिद्धेः किमर्थमिह घत्वविधानमित्यत आह घत्वमभ्यासस्येति। इह विधीयत इति शेषः। पाटेरिति। वार्तिकमिदम्। पाटेर्णौ पाटि इत्यस्माद् अचि णेर्लुक्, द्वित्वम्। अभ्यासस्य ऊगागमः। अभ्यासस्य आकारस्य ह्रस्वे तस्य दीर्घश्चेत्यर्थः। वृद्धिनिवृत्तये णेर्लुग्विधिः। आगागमे दीर्घोच्चारणाद् हलादिशेषेण टकारस्य न निवृत्तिः, हालादिशेषे तु आद्गुणे पोपट इति रूपस्य उगागमेऽपि सिद्धेः। इगुपधज्ञा। 'कॄ विक्षेपे' इत्यस्य इत्वे रपरत्वे च किर् इति रेफान्तम्। इगुपध, ज्ञा, प्री, किर् एषां द्वन्द्वात्पञ्चमी। कित्त्वं गुणनिषेधार्थम्। ज्ञ इति। आतो लोपः। प्रिय इति। प्रीञ् के इयङ्। किर इति। कॄधातोः के इत्वे रपरत्वम्। आतश्चोपसर्गे। कः स्यादिति। शेषपूरणम्। उपसर्गे उपपदे आदन्ताद्धातोः कः स्यादिति फलति। णस्यापवाद इति। तस्य उपगऽनुपसर्गे च आदन्तसामान्यविहितत्वाद् इति भावः। सुग्ल इति। ग्लैधातोः 'आदेचः—' इत्यात्वे कृते कप्रत्यये आतो लोप इति भावः। प्रज्ञ इति। ज्ञाधातोरातो लोपः।

पाटेर्णिलुगिति। 'णेरनिटि' इति लोपे हि प्रत्ययलक्षणन्यायेन पाटूपट इत्यत्रोपधावृद्धिः स्यादिति भावः। इहापि पूर्ववद्ध्रस्वहलादिःशेषयोरभावः। इगुपध। इक् उपधा यस्य सः। ज्ञा अवबोधने, प्रीञ् तर्पणे, कॄ विक्षेपे। एषामितरेतरयोगद्वन्द्वे व्यत्ययेन पञ्चम्येकवचने कृशब्दस्य धात्वनुकरणत्वेन प्रकृतिवदनुकरणमित्यतिदेशाद् 'ॠत इद्धातोः' इति इत्वम्। समाहारद्वन्द्वे तु नपुंसकह्रस्वत्वे सति इत्वं न स्यात्। ज्ञ इति। जानातीति ज्ञः, 'आतो लोप इटि च' इत्यालोपः। पाघ्राध्मा। पा पाने।

( ३--१--१३७ ) पिबतीति पिबः । जिघ्रः । धमः । धयः । धया कन्या । धेटष्टित्त्वात् 'स्तनन्धयी' इति खशीव ङीप्प्राप्तः । 'खशोऽन्यत्र नेष्यते' इति हरदत्तः । पश्यतीति पश्यः । 'घ्रः संज्ञायां न' ( वा. १९६७) । 'व्याघ्रादिभिः--' ( सू. ७३५ ) इति निर्देशात् । २९०० अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च । ( ३--१--१३८ ) शः स्यात् । लिम्पः । विन्दः । धारयः । पारयः । वेदयः । उदेजयः । चेतयः । सातिः

---

पाघ्रा । अत्र 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ग्रहणम्' इति मत्वाह पिबतीति पिब इति । पाधातोः शप्रत्यये तस्य शित्त्वेन सार्वधातुकत्वात् 'पाघ्राध्मा--' इति पिबादेशः । स चादन्त इत्युक्तम् । शप् पररूपम् । जिघ्र इति । 'पाघ्रा-' इति घ्राधातोर्जिघ्रादेशः । धम इति । ध्माधातोर्धमादेशः । धय इति । धेटः शः, शप्, अयादेशः, पररूपमिति भावः । धया कन्येति । अत्र धेट्धातुष्टित् स अदन्तो न भवति । यस्त्वदन्तो धयशब्दः, स न टित् । अतोऽत्र 'टिड्ढाणञ्--' इति न ङीबिति भावः । धेटष्टित्त्वादित्यारभ्य हरदत्तमतम् । स्तनंधयीतीति । स्तनशब्दे उपपदे धेट्धातोः 'नासिकास्तनयोः--' इति खशि कृते 'खित्यनव्ययस्य' इति मुमि स्तनन्धयशब्दः । तत्र खशि कृते धेटष्टित्त्वमाश्रित्य यथा 'टिड्ढाणञ्' इति ङीप्, तथा धया कन्येत्यत्रापि ङीप् प्राप्तः । स ङीप् खशोऽन्यत्र नेष्यते इति हरदत्त आहेत्यर्थः । वस्तुतस्तु 'टिड्ढाणञ्--' इति सूत्रे टिदाद्यवयवाकारस्यैव ग्रहणमिति भाष्यविरोधादिदं चिन्त्यम् । न च टित्त्वसामर्थ्यादेव स्तनन्धयीशब्दाद् ङीबिति वाच्यम्, धया कन्येत्यत्रापि ङीप्प्रसङ्गात् खशोऽन्यत्र नेष्यते इत्यत्र प्रमाणाभावात् । तस्मात् स्तनन्धयीत्यप्रामाणिकमेव । तस्य प्रामाणिकत्वे गौरादित्वं कल्प्यम्, ङीष्यप्युदात्तनिवृत्तिस्वरप्राप्त्या स्वरे विशेषाभावाद् इति शब्देन्दुशेखरे स्थितम् । दृश उदाहरति पश्य इति । 'पाघ्रा--' इति पश्यादेशः । घ्रः संज्ञायां नेति । घ्राधातोः संज्ञायां शो नेत्यर्थः । कुत इत्यत आह व्याघ्रादिभिरिति । अन्यथा व्याजिघ्रादिभिरिति निर्दिशेदिति भावः । अनुपसर्गात् । शः स्यादिति । शेषपूरणम् । लिम्पः विन्द इति । 'लिप उपदेहे' 'विद्लृ लाभे' इति तुदादौ, ताभ्यां शः, 'शे मुचादीनाम्' इति नुम् । सूत्रे कृतनुमौ लिम्पविन्दौ निर्दिष्टौ । अतस्तौदादिकयोरेव ग्रहणम् धारय इति । 'धृञ् धारणे' 'धृङ् अवस्थाने' आभ्यां हेतुमण्ण्य-

---

पा रक्षणे इत्ययं तु न गृह्यते लुग्विकरणत्वात् । इह सूत्रे उपसर्ग इति केचिदनुवर्तयन्ति तद्बहूनामसंमतम । तथा च श्रीहर्षः 'फलानि धूमस्य धयानधोमुखान्' इति । श्रूयते च 'यदा पश्यः पश्यते रुक्मवर्णम्' इति । अनुपसर्गाल्लिम्पविन्द । इह लिम्पविन्देति भाविना नुमा सनुम्कौ निर्दिष्टौ । तेन लाभार्थस्यैव विन्देर्ग्रहणं न तु सत्ताद्यर्थकानाम् । धारय इति । धृञ् धारणे, धृङ् अवस्थाने । ण्यन्तयोर्द्वयोरपि ग्रहणम् । अथ कथं 'न मह्यमत्रोत्तरधारयस्य ते' इति श्रीहर्षः । परत्वाद्धि सूत्रधारादिष्विव कर्मण्यणा भाव्यम् । तथा च वार्तिकम् 'श्याद्व्यधासुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्चाकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन' इति । सत्यम् । कर्मणः शेषत्वविवक्षायामणोऽप्राप्त्या शे कृते शेष-

सुखार्थः । सौत्रो हेतुमण्ण्यन्तः । सातय । वासरूपन्यायेन क्विपि सात्परमात्मा । सात्वन्तो भक्ताः । षह मर्षणे, चुरादिः । हेतुमण्ण्यन्तो वा । साहयः । अनुपसर्गात् किम्—प्रलिपः । 'नौ लिम्पेर्वाच्यः' ( वा० १९९८ ) । निलिम्पा देवाः । 'गवादिषु विन्देः संज्ञायाम्' ( वा० १९५९ ) । गोविन्दः । अरविन्दम् । २९०१ **ददातिदधात्योर्विभाषा** । ( ३-१-१३९ ) शः स्यात् । ददः । दधः । पक्षे वक्ष्यमाणो णः । अनुपसर्गादित्येव । प्रदः । प्रधः । २९०२ **ज्वलितिकसन्तेभ्यो णः** । ( ३—१—१४० ) इतिशब्द आद्यर्थः । ज्वलादिभ्यः

---

न्ताभ्यां, शः, शप्, गुणायादेशौ । **पारय इति** । पृधातोः ण्यन्ताच्छः, शप्, गुणायादेशौ । विद वेदनाख्यादिषु । चुरादिण्यन्ताच्छः, शप् गुणायादेशौ । **उदेजय इति** । उत्पूर्वादेजधातोः ण्यन्ताच्छः, शप्, गुणायादेशौ । **चेतय इति** । 'चिती संज्ञाने' ण्यन्ताच्छः, शप्, गुणायादेशौ । एवं सातयः । सादिति रूपं साधयितुमाह **वासरूपन्यायेन** । **क्विबिति** । सातयति सुखयतीत्यर्थे क्विप्, णिलोपः । यद्यपि क्विप् सामान्यविहितः सातेः शप्रत्ययस्तु तदपवादः । तथापि वासरूपविधिना क्विपि भवतीत्यर्थः । **सात्परमात्मेति** । 'एष ह्येवानन्दयति' इति श्रुतेः । तस्य सुखयितृत्वावगमादिति भावः । **सात्वन्त इति** । सात् परमात्मा भजनीय एषामित्यर्थे मतुप् । 'मादुपधायाः—' इति मस्य वः । 'तसौ मत्यर्थे' इति भत्वात् पदत्वाभावान्न जश्त्वम् । **साहय इति** । साहेः शः शप्, गुणायादेशो । **प्रलिप इति** । इगुपधलक्षणः कः । **नौ लिम्पेरिति** । वार्तिकमिदम् । नि इत्युपसर्गे उपपदे लिम्पेः शो वाच्य इत्यर्थः । अनुपसर्गादित्युक्तेः पूर्वेणाप्राप्तौ वचनम् । **गवादिष्विति**। वार्तिकमिदम् । गवादिषु उपपदेषु विन्देः शो वाच्य इत्यर्थः । संज्ञायामेवेति नियमार्थमिदम् । **गोविन्द इति** । गा उपनिषद्वाचः प्रमाणतया विन्दतीत्यर्थः । **अरविन्दमिति** । चक्रे नाभिनेम्योरन्तरालप्रोतानि काष्ठानि अराणि तत्सदृशानि दलानि विन्दतीत्यर्थः । कर्मण्यणोऽपवादः शः । **ददातिदधात्योर्विभाषा** । दाञ्, धाञ् आभ्यां शो वा स्यात् । **ददः दध इति** । शः, शप् 'श्लुः' 'श्लौ' इति द्वित्वम्, आतो लोपः । **वक्ष्यमाण इति** । 'श्याद्व्यध—' इत्यनेनेति भावः । **प्रदः प्रध इति** । 'आतश्चोपसर्गे इति कः । **ज्वलिति** । **आद्यर्थ इति** । तथा च ज्वल् इति आदिर्येषां ते ज्वलितयः, ते च ते कसन्ताश्चेति ज्वलितिकसन्ताः, तेभ्य इति विग्रहः, तदाह **ज्वलादिभ्य इति** । 'ज्वल दीप्तौ' इत्यारभ्य 'कस

---

षष्ठ्यन्तेन समासो भविष्यति । एतेन गङ्गाधरभूधरजलधरादयो व्याख्याताः । **पारय इति** । पार कर्मसमाप्तौ चुरादिण्यन्तः । पृ पालनपूरणयोरिति वा हेतुमण्ण्यन्तः । **वेदय इति** । विद चेतनाख्यानादिषु चुरादिः, ज्ञानाद्यर्थानामन्यतमो वा हेतुमण्ण्यन्तः । इहोदाहरणेषु लिपिविदिभ्यां 'तुदादिभ्यां शः' 'शे मुचादीनाम्' इति नुम् । धार्यादिभ्यस्तु शब्गुणायादेशाः । **अरविन्दमिति** । चक्रस्य नाभिनेम्योरन्तराले स्थितानि काष्ठानि अराः तदाकाराणि दलानि तत्सादृश्यादरास्तान् विन्दति लभते इत्यर्थे कर्मण्यणो बाधनायेदम् **ददातिधात्योर्विभाषा** । **ददः दध इति** ।

कसन्तेभ्यो वा णः स्यात् । पक्षेऽच् । ज्वालः, ज्वलः । चालः, चलः । अनुपसर्गादित्येव । उज्ज्वलः । 'तनोतेरुपसंख्यानम्' ( वा० १९७० ) । इहानुपसर्गादिति विभाषेति च न संबध्यते । अवतनोतीत्यवतानः । २९०३

**श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च** ( ३-१-१४१ )

श्यैङ्प्रभृतिभ्यो नित्यं णः स्यात् । श्यैङोऽवस्यतेश्चाऽऽदन्तत्वात्सिद्धे पृथग्ग्रहणमुपसर्गे कं बाधितुम् । अवश्यायः । प्रतिश्यायः । आत्—दायः धायः । व्याधः । 'स्रु गतौ' आङ्पूर्वः संपूर्वश्चः । आस्रावः । संस्रावः । अत्यायः ।

---

गतौ' इत्येवमन्तेभ्य इत्यर्थः । वा णः स्यादिति । विभाषेत्यनुवर्तते इति भावः । पक्षेऽजिति । इगुपधेभ्यः कः इत्यपि बोध्यम् । उपसंख्यानमिति । णस्येति शेषः । न संबध्यते इति । अवतान इत्येव भाष्ये उदाहरणादिति भावः । श्याद्व्यधास्रु । श्या, आत्, व्यध, आस्रु संस्रु, अतीण्, अवसा, अवहृ, लिह, श्लिष, श्वस् एषामेकादशानां समाहारद्वन्द्वात्पञ्चमी । अनुपसर्गादिति निवृत्तम्, उत्तरसूत्रेऽनुपसर्गग्रहणात् । एवं च तत्संबद्धं विभाषाग्रहणं च नानुवर्तते, तदाह नित्यमिति । श्यैङ इति । श्यैङ्धातोः अवपूर्वकस्य षोधातोश्च कृतात्त्वयोः सूत्रे निर्देशः । तयोरादन्तत्वादेव सिद्ध पुनर्ग्रहणम् 'आतश्चोपसर्गे' इति कप्रत्ययबाधनार्थमित्यर्थः । अवश्यायः प्रतिश्याय इति । श्यैङः आत्वे कृते णः, आतो युक् । आदिति । आदन्तस्योदाहरणसूचनम् । दायः धाय इति । णे आतो युक् । व्याध इति । व्यधेर्णे उपधावृद्धिः । आस्रावः, संस्राव इति । णे 'अचोऽञ्णिति, इति वृद्धिः आवादेशः । अत्याय इति । अतिपूर्वादिण्धातोर्णे

---

श परे 'जुहोत्यादिभ्यः—' इति श्लुः 'श्लौ' इति द्वित्वम् । अपित्सार्वधातुकस्य शस्य ङित्त्वाद् 'आतो लोप,—' इत्यालोपः । वक्ष्यमाणो ण इति । 'श्याद्व्यधा—' इति णप्रत्यये आतो युकि । दायः । धायः । प्रदः प्रध इति । 'आतश्चोपसग' इति कः । स्यादेतत्—दद दाने, दध धारणे, आभ्यामचि ददो दध इति सिद्धम् । दाधाभ्यामादन्तलक्षणे णप्रत्यये दायो धाय इत्यपि, ततश्चेदं सूत्रं व्यर्थमिति चेत् । सत्यम् । स्वरार्थमिदं सूत्रम् । अददः । अदधः । इह हि अव्ययपूर्वपदप्रकृतिस्वर इष्यते । अजन्तत्वे तु अजकावशक्तावित्यन्तोदात्तत्वं स्यात् । इतिशब्द आद्यर्थं इति । निपातानामनेकार्थत्वादिति भावः । श्याद्व्यधा । अनुपसर्गादिति निवृत्तम् । उत्तरसूत्रे पुनरनुपसर्गग्रहणात् । एवं च तत्संबद्धं विभाषाग्रहणमपि निवृत्तं तदाह नित्यमिति । इह सूत्रे श्यैङ् गतावित्यस्य आत्वे श्या आत् इति प्रश्लेषो न तु शीङो यणादेशेन, नाप्यततेः अच्छब्दान्तानां वायतिप्रभृतीनां, नाप्यकारान्तानां वा प्रश्लेषेण ग्रहणं व्याख्यानादिति भावः । कं बाधितुमिति । अन्यथा 'आतश्चोपसग' इति विशेषविहितः कः सामान्यविहितस्य णस्य बाधकः स्यादित्यर्थः । स्रु गतौ । प्राचा तु सूत्रे आश्रु संश्रु इति तालव्यं पठित्वा श्रृणोतिरुदाहृतस्तदनाकरम् । तथा च प्रयुञ्जने—'अनाश्रवावः किमहं कदापि वक्तुं विशेषः' इति नैषधादौ । अमरोऽप्याह 'वचने स्थित आश्रवः' इति । यदि तु सूत्रे अस्मिन् श्रृणोतेर्ग्रहणं

अवसायः । अवहारः । लेहः । श्लेषः । श्वासः । २९०४ दुन्योरनुपसर्गे । (३-१-१४२) णः स्यात् । दुनोतीति दावः । नीसाहचर्यात्सानुबन्धकाद्दुनोतेरेव णः । दवतेस्तु पचाद्यच्, दवः । नयतीति नायः । उपसर्गे तु प्रदवः । प्रणयः । २९०५ विभाषा ग्रहः (३-१-१४३) णो वा । पक्षेऽच् । व्यवस्थितविभाषेयम् । तेन जलचरे ग्राहः । ज्योतिषि ग्रहः । 'भवतेश्च' इति काशिका । भवो देवः संसारश्च । भावाः पदार्थाः । भाष्यमते तु प्राप्त्यर्थाच्चुरादिण्यन्तादच् । भावः । २९०६ गेहे कः । (३-१-१४४) गेहे कर्तरि ग्रहेः कः स्यात् । गृह्णाति धान्यादिकमिति गृहम् । तात्स्थ्याद् गृहा दाराः ।

---

वृद्ध्यायादेशौ । अवसाय इति । अवपूर्वात् 'षोऽन्तकर्मणि' इत्यस्माद् णे आत्वे आतो युक् । लेहः श्लेष इति । णे लघूपधगुणः श्वास, इति । णे उपधावृद्धिः । दुन्योरनुपसर्ग । दुनोतेः नयतेश्चेत्यर्थः । दवशब्दं साधयितुमाह नीसाहचर्यादिति । नीञ्धातुः सानुबन्धकः, तत्साहचर्यात् 'टु दु उपतापे' इति स्वादिगणस्थादेव णप्रत्यय इत्यर्थः । दवतेस्त्विति । 'दु द्रु गतौ' इति भौवादिकाद् निरनुबन्धकात्पचाद्यजित्यर्थः । विभाषा ग्रहः । व्यवस्थितविभाषेयमिति । इदं 'शाच्छोः' इति सूत्रे भाष्ये स्पष्टम् । तेनेति । जलचरे मत्स्यादौ वाच्ये प्रत्यये उपधावृद्धौ ग्राह इत्येव भवति । ज्योतिषि सूर्यचन्द्रादौ वाच्ये अच्प्रत्यये ग्रह इत्येव भवतीत्यर्थः । भवतेश्चेति । णो वेति शेषः । पक्षे अच् । काशिकेति । भाष्ये तु न दृश्यते इति भावः । इयमपि व्यवस्थितविभाषैव, तदाह भावो देव इति । महादेव इत्यर्थः । अत्र अजेवेति नावः । भावाः पदार्था इति । अत्र ण एवेति भावः । ननु भवतेश्चेति णविकल्पस्य भाष्ये अदर्शनात् कथं भाष्यमते भावशब्द इत्यत आह भाष्यमते त्विति । भावयति प्रापयति स्वकार्यमित्यर्थे 'भू प्राप्तौ' इति चुरादिण्यन्ताद् भावि इत्यस्माद् अच्प्रत्यये णिलोपे भावशब्द इत्यर्थः । गेहे कः । 'विभाषा ग्रहः' इत्यस्यापवादः । गृहमिति । 'ग्रहिज्या–' इति संप्रसारणं पूर्वरूपं च । ननु गृहा दारा इति कथम् । गेहे कर्तर्येव वाच्ये कप्रत्ययविधानादित्यत आह तात्स्थ्यादिति । गृहशब्दो गेहस्थे लाक्षणिक इति भावः ।

---

स्यात्तर्हि 'ऋदोरप्' इति सामान्यविहितमपं बाधित्वा आङ्पूर्वकाच्छृणोतेर्विशेषविहितो ण एव स्यात्, तथा च आश्रव इति रूपं न स्यात्किन्त्वाश्राव इति स्यादिति दिक् । लेहः श्लेष इति । 'इगुपधज्ञा–' इति कप्रत्यये गुणो न स्यादिति भावः । दुनोतेरिति । टुदु उपतापे इत्यस्मात् । दवतेरिति । दु गतावित्यस्मात् । दव इति । 'दवदावौ वनारण्यवह्नी' इत्यमरः । काशिकेति । भाष्ये त्वेतद्वार्तिकं नास्तीति तन्मते भावशब्दोऽसाधुरित्यत आह भाष्यमते त्विति । गेहे कः । गेह इति प्रत्ययार्थस्य कर्तुर्विशेषणं नोपपदम् । 'गृहपतिना संयुक्ते ञ्यः' इति निर्देशादित्यभिप्रेत्याह गेहे कर्तरीति । एतत्सूत्रं तु शक्यमकर्तुम् । गृहू ग्रहणे इति भ्वादेरिगुपधलक्षणे कप्रत्यये कृते गृहशब्दस्य सिद्धेः । तात्स्थ्यादिति । भवति हि तात्स्थ्यात्ताच्छब्द्यम् । मञ्चाः क्रोशन्तीत्यादौ मञ्चशब्देन पुरुषा अपि व्यपदिश्यन्ते, एवं च गृह

**२९०७ शिल्पिनि ष्वुन् ।** (३-१-१४५) क्रियाकौशलं शिल्पं तद्वत्कर्तरि ष्वुन्स्यात् । 'नृतिखनिरञ्जिभ्य एव' (वा० १९७१) नर्तकः-नर्तकी । खनकः-खनकी । असि अके अने च रञ्जेर्नलोपो वाच्यः' (वा० ४०६७) । रजकः-रजकी । भाष्यमते तु नृतिखनिभ्यामेव ष्वुन् । रञ्जेस्तु 'क्वुन्शिल्पिसंज्ञयोः' ( उ० सू० १९० ) इति क्वुन् । टाप् । रजिका । पुंयोगे तु रजकी । **२९०८ गस्थकन् ।** ( ३-१-१४६ ) गायतेस्थकन्स्यात्, शिल्पिनि कर्तरि । गाथकः । **२९०९ ण्युट् च ।** ( ३-१-१४७ ) गायनः । टित्त्वाद्गायनी । **२९१० हश्च व्रीहिकालयोः ।** ( ३-१-१४८ ) हाको हाङश्च ण्युट् स्यात् व्रीहौ काले च कर्तरि । जहात्युदकमिति हायनो व्रीहिः । जहाति भावानिति

---

गृहा दारा इति । 'दारेष्वपि गृहाः' इत्यमरः । **शिल्पिनि ष्वुन् ।** **नृतिखनिरञ्जिभ्य एवेति** । वार्तिकमिदम् । **नर्तकीति** । षित्त्वाद् ङीषिति भावः । 'दंशसञ्जस्वञ्जां शपि' इति सूत्रे 'रजकरजनरजस्सूपसंख्यानम्' इति वार्तिकम् । तद् अर्थतः संगृह्णाति **असि अके अने चेति** । **रज इति** । रञ्जेः शिल्पिनि ष्वुनि अकादेशे नलोपः । **रजकीति** । षित्त्वाद् ङीप् । **नृतिखनिरञ्जिभ्य एवेति** परिगणनाद् 'वेञ् तन्तुसन्ताने' इत्यस्मात् कृतात्त्वात् 'श्याद्व्यध-' इति णप्रत्यये आतो युकि वाय इति सिध्यति । **भाष्यमते तु नृतिखनिभ्यामेवेति** । इदं च 'दंशसञ्जस्वञ्जां शपि' इति सूत्रे भाष्ये स्पष्टम् । ननु भाष्यमते क्वुनि रजकीति कथमित्यत आह **पुंयोगे तु रजकीति** । **गस्थकन्** । गः थकन्निति च्छेदः । गैधातोः कृतात्वस्य ग इति पञ्चम्यन्तम्, तदाह **गायतेरिति** । **ण्युट् च** । चकार उक्तसमुच्चये । गायतेर्ण्युट् थकन् च शिल्पिनि कर्तरि । **गायन इति** । आत्वे युक् । 'आदेचः-' इत्यात्वस्य अनैमित्तिकत्वेन वृद्ध्यपेक्षया अन्तरङ्गत्वात् । यद्यपि 'गस्थकन् ण्युट् च' इत्येकमेव सूत्रमुचितम् । तथापि ण्युट एवोत्तरसूत्रे अनुवृत्त्यर्थो योगविभागः । **हश्च** । 'ओ हाक् त्यागे' इत्यस्य 'ओ हाङ् गतौ' इत्यस्य च हः इति

---

शब्दो वेश्मनि मुख्यो दारेषु त्वौपचारिक इत्यर्थः । अत्रेदवधेयम्—गृहशब्दोयमर्धर्चादित्वादुभयलिङ्गः । तत्र नपुंसकलिङ्गोऽभिधेयवचनः, पूंल्लिङ्गस्तु बहुवचनान्त एव । 'गृहाः पुंसि च भूम्न्येव' इत्यमरोक्तेरिति । **शिल्पिनि ष्वुन्** । पूर्वेण साहचर्याच्छिल्पिनीत्यपि प्रत्ययार्थस्य विशेषणं न तूपपदमित्याह **तद्वति कर्तरीति** । **भाष्यमते त्विति** । तथा च षष्ठे 'रजकरजनरजःसूपसंख्यानम्' इति वार्तिकं प्रत्याख्यातुं भाष्यकृतोक्तम् । रजकरजनरजःसु कित्वात् सिद्धं कित एवैते औणादिक इति कैयट आह **रजक इति** । 'शिल्पिनि ष्वुन्' इति ष्वुन् । रजनमिति 'रञ्जेः क्युन्' इति क्युन् । रज इति 'भूरञ्जिभ्यां कित्' इत्यसुन् प्रत्यय इत्यादि । **गस्थकन्** । गामादाग्रहणेष्वविशेषेऽपि गै शब्द इत्ययमेवेह गृह्यते न तु गाङ् गताविति । थकन् प्रत्ययो हि गायत्यर्थविषयमेव शिल्पिनमभिधातुं समर्थं इत्याशयेनाह **गायतेरिति** । **ण्युट् च** । योगविभाग उत्तरत्र अस्यैवानुवृत्त्यर्थः । **गायन इति** । आतो युक् । **जहात्युदकमिति** । उदकादधिकं वर्धनात् । **भावानिति** । भावाः पदार्थाः, तान्

७०९ अच्तस्य जङ्घ च। तस्य जनेर्जङ्घादेशः स्यादच्च। जङ्घा। ७१० हन्तेः शरीरावयवे द्वे च। जघनम्। 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः'। ७११ क्लिशेरन्लो लोपश्च। लकारस्य लोपः। केशः। ७१२ फलेरितजादेश्च पः। पलितम्। ७१३ कृञादिभ्यः संज्ञायां वुन्। करकः करका। कटकः। नरकम्, नरकः। 'नरको नारकोऽपि च' इति द्विरूपकोशः। सरकं गमनम्। कोरकः। कोरकं च। ७१४ चीकयतेराद्यन्तविपर्ययश्च।

---

अस्मात्तन्प्रत्ययः, स्यात्, धातोरन्त्यनकारस्य लोपश्च। अच् तस्य जङ्घ च। तस्येत्यर्थमाह जनेरिति। जनेः अच्प्रत्ययः धातोर्जङ्घादेशश्चेत्यर्थः। अजाद्यतष्टाप्। हन्तेः शरीरावयवे। शरीरावयवे वाच्ये हन्तेरच्प्रत्ययो धातोर्द्वित्वं चेत्यर्थः। जघनमिति। हो हन्तेरिति कुत्वम्, अभ्यासाच्चेति वा। अमरोक्तिमाह पश्चान्नितम्ब इति। क्लिशेरन् लो लोपश्च। क्लिशू विबाधने अस्मादन् स्याल्लकारस्य लोपश्चेत्यर्थः। फलेरितजादेश्च पः। फल निष्पत्तौ अस्मादितच्प्रत्ययः, आदेः फकारस्य पकारादेशश्चेत्यर्थः। पलितमिति। 'पलितं जरसा शौक्ल्यम्' इत्यमरः। कृञादिभ्यः संज्ञायां वुन्। डु कृञ् करणे इत्यादिभ्यः संज्ञायां वुन्स्यात्। करक इति। युवोरनाकावित्यकादेशः। 'कमण्डलौ च करकः' इत्यमरः। कटक इति। कटे वर्षावरणयोः अस्माद वुन्। 'भूभृन्नितम्बवलयचक्रेषु कटकोऽस्त्रियाम्' इत्यमरः। चीकयतेराद्यन्तविपर्ययश्च। चीक आमन्त्रणे अस्मात्संज्ञायां वुन् स्यात्, धातोराद्यन्तवर्णयोः विपर्ययश्चेत्यर्थः। 'कीचका वेणवस्ते स्युर्ये स्वनन्त्य-

---

प्रादुर्भावे अस्मात्तन्प्रत्ययः स्याद्धातोरन्त्यलोपश्च। 'जटा लग्नकचे मूले मांस्यां प्लक्षे पुनर्जटी' इति मेदिनी। जङ्घेति। जनेरच्प्रत्यये सति 'अजाद्यतः—' इति टाप्। हन्तेः। देहावयवे वाच्ये हन्तेरच्प्रत्ययः स्याद् द्वित्वं च धातोः। अभ्यासकार्यम्, 'अभ्यासाच्च' इति कुत्वम्। अमरोक्तिमाह पश्चान्नितम्ब इति। 'जघनं च स्त्रियाः श्रोणिपुरोभागे कटावपि' इति मेदिनी। क्लिशेः। क्लिशू विबाधनेऽस्मादन्स्यात्। 'केशः स्यात्पुंसि वरुणे ह्रीबेरे कुण्डलेऽपि च' इति मेदिनी। फलेः। फल, निष्पत्तौ। 'पलितं जरसा शौक्ल्यम्' इत्यमरः। 'पलितं शैलजे तापे केशपाशे च कर्दमे' इति मेदिनी। कृञादिभ्यः। डुकृञ् करणे। करकः कमण्डलुः। 'करकस्तु पुमान्पक्षिविशेषे दाडिमेऽपि च। द्वयोर्मेघोपले न स्त्री करके च कमण्डलौ॥' इति मेदिनी। करका वृष्टिपाषाणः। कटे वर्षावरणयोः, 'कटको वलये सानौ'। क्वुन् शिल्पिसंज्ञयोः' इति क्वुनाप्ययं सिद्धस्तथा च गुणभाज इहैव वुनि उदाहार्याः, गुणनिषेधभाजस्तु क्वुनि। उदासीनास्तु यत्र कुत्रचिदिति भावः। नृ नये। 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्' इत्यमरः। 'नरकः पुंसि निरये देवारातिप्रभेदयोः' इति मेदिनी। उदयनाचार्यास्तु नच नरकाण्येव सन्तीति क्लीबं प्रयुञ्जते तन्निर्मूलमित्याहुः। सृ गतौ। 'सरकोऽस्त्री शीधुपात्रे शीधुपानेक्षुशीधुनोः' इति मेदिनी। कुर शब्दे। 'कोरकोऽस्त्री कुड्मले स्यात्कक्कोलकमृणालयोः' इति मेदिनी। 'विचकार कोरकाणि' इति माघः 'कोरकः पुमान्' इत्यमरोक्तिस्तु नादर्तव्येत्याहुः। अपवरकादयोऽपि इहैव बोध्याः। चीक-

कीचको वंशभेदः । ७१५ पचिमच्योरिच्चोपधायाः । पेचकः । मंचकः । ७१६ जनेररष्ठ च । जठरम् । ७१७ वचिमनिभ्यां चिच्च । वठरो मूर्खः । मठरो मुनिशौण्डयोः । विदादित्वान्माठरः । गर्गादित्वान्माठर्यः । ७१८ ऊर्जि दृणातेरलचौ पूर्वपदान्तलोपश्च । 'ऊर्दरः शूररक्षसोः' ७१९ कुद-रादयश्च । कुदरः कुसूलः । मृदरं विलसत् । सूदरः सर्पः । ७२० हन्तेर्यु-श्चाद्यन्तयोर्घत्वतत्वे । घातनो मारकः । ७२१ क्रमिगमिक्षमिभ्यस्तु-न्वृद्धिश्च । क्रान्तुः पक्षी । गान्तुः पथिकः । क्षान्तुर्मशकः । ७२२ हर्यतेः कन्यन्हिरच् । कन्यन्प्रत्ययः । हिरण्यम् । ७२३ कृञः पासः । कर्पासः

---

निलोद्धताः' इत्यमरः । दैत्यभेदे च । पचिमच्योरिच्चोपधायाः । डु पचष् पाके, मच कल्कने, आभ्यां वुन्स्यात्, उपधाया इकारादेशश्च । पेचक इति । उपधाया इकारे लघूपधगुणे च रूपम् । 'उलूके करिणः पुच्छमूलोपान्ते च पेचके' इत्यमरः । जनेररष्ठ च । जनीप्रादुर्भावे अस्मादरप्रत्ययः, धातोष्ठकारश्चान्तादेशः । 'जठरः कठिनेऽपि स्यात्' इत्यमरः । वचिमनिभ्यां चिच्च । वच परिभाषणे, मन ज्ञाने, आभ्यामरप्रत्ययः स्यात्, स च चित्, ठकारश्चान्तादेशः । ऊर्जि दृणातेरलचौ पूर्वपदान्त्यलोपश्च । ऊर्क् शब्दे दृ विदारणे इत्यस्मादलचौ प्रत्ययौ स्तः, पूर्वपदान्त्यवर्णस्य लोपश्च । ऊर्दर इति । पूर्वपदान्त्यस्य लोपे धातोर्गुणे च रूपम् । कुदरादयश्च । एते निपात्यन्ते । कुदर इति । कु इत्यव्ययपूर्वकदृधातोरालप्रत्यये रूपम् । एवं सूपूर्वकात्सूदर इति । हन्तेर्युश्चाद्यन्तयोर्घत्वतत्वे । हन हिंसागत्योः अस्माद्युन् स्यात्, आद्यन्तयोर्हकारनकारयोर्यथासंख्यं घकारतकारौ स्तः । क्रमिगमि-क्षमि । क्रमु पादविक्षेपे, गम्लृ गतौ, क्षमूष् सहने एभ्यः तुन्स्यात, वृद्धिश्च । हर्यतेः कन्यन् हिरच् । हर्य गतिकान्त्योः अस्मात्कन्यन्प्रत्ययः, प्रकृतेर्हिरजित्यर्थः । हिरचि चकार इत्संज्ञकः, अकार उच्चारणार्थः । हिरण्यमिति । कित्वान्न लघु-पधगुणः । कृञः पासः । डु कृञ् करणे अस्मात्पासः प्रत्यय इत्यर्थः । कर्पास

---

यतेः । चिक आमन्त्रणे, चीक च चुरादिः । अस्याद्यन्तविपर्ययः । पचिमच्योरित्वं चानुपदं वक्ष्यमाणं वाहुलकवललभ्यं बोध्यम् । 'कीचको दैत्यभिद्वाताहतसस्वनवंशयोः' इति मेदिनी । डुपचष् पाके । 'उलूके करिणः पुच्छमूलोपान्ते च पेचकः' इत्यमरः । 'पेचको गजलाङ्गूलमूलोपान्ते च कौशिके' इति मेदिनी । मचि मुचि कल्कने । 'मेच-कस्तु मयूरस्य चन्द्रके श्यामले पुमान् । तद्युक्ते वाच्यवत्क्लीबं स्रोतोऽञ्जनान्धकारयोः' इति मेदिनी । जनेः । जन जनने, जनी प्रादुर्भावे वा । 'जठरः कठिनेऽपि स्यात्' इत्यमरः । 'जठरो न स्त्रियां कुक्षौ वृद्धककर्टयोस्त्रिषु' इति मेदिनी । वचि । वच परिभाषणे, मन ज्ञाने, आभ्यामरप्रत्ययः स्यात्स च चित् रश्चान्तादेशः । 'वठरः कुक्कुटे वण्टे सरठे च' इति मेदिनी । ऊर्जि । दृ विदारणेऽस्मादूर्ज्युपपदे अलचौ प्रत्ययौ स्तः । कुदरादयश्च । कु सु मृ एतदव्ययपूर्वकदृणातिप्रकृतिकालजन्ता निपात्यन्ते । हन्तेः । हन हिंसागत्योः । क्रमि । क्रमु पादविक्षेपे, गम्लृ गतौ, क्षमूष् सहने, एभ्यस्तुन्स्यादेषां वृद्धिश्च । हर्यतेः । हर्य गतिकान्त्योः । 'हिरण्यं रेतसि द्रव्ये

बिल्वादिस्त्वात्कार्पासे वस्त्रम् । ७२४ जनेस्तु रश्च । जर्तुर्हस्ती योनिश्च । ७२५ ऊर्णोतेर्डः । ऊर्णा । ७२६ दधातेर्यन् नुट् च । धान्यम् । ७२७ जीर्यतेः क्रिन् रश्च वः । 'जिव्रिः स्यात्कलपक्षिणोः' । बाहुलकाद् 'हलि च' (सू० ३५४) इति दीर्घो न । ७२८ मव्यतेर्यलोपो मश्चापतुट् चालः । मव्यतेरालप्रत्ययः स्यात्तस्यापतुडागमो धातोर्यलोपो मकारश्चान्त्यस्य । ममापतालो विषये । ७२९ ऋजेः कीकन् । ऋजीक इन्द्रो धूमश्च । ७३० तनोतेर्डउः सन्वच्च । 'तितउः पुंसि क्लीबे च' । ७३१ अर्भकपृथुकपाका वयसि । 'ऋघु

---

इति । धातोर्गुणः । जनेस्तु रश्च । जन जनने अस्मात्तुप्रत्ययः रेफश्चान्तादेश इत्यर्थः । जर्तुरिति । नकारस्य रेफादेशः । ऊर्णोतेर्डः । ऊर्णुञ् आच्छादने अस्माड्डप्रत्यय इत्यर्थः । डित्त्वाट्टिलोपः । 'ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः' इत्यमरः । दधातेर्यन्नुट् च । डु धाञ् धारणपोषणयोः, अस्माद्यप्रत्ययः तस्य नुडागमश्च । जीर्यतेः क्रिन् रश्च वः । जॄ वयोहानौ अस्मात्क्रिन् स्यात्, धातो रेफस्य वकारादेशश्चेत्यर्थः । जिव्रिरिति । क्रिनि 'ॠत इद्धातोः' इति इत्वे रपरत्वे रेफस्य वत्वे च रूपम् । नन्वत्र हलि चेति दीर्घो दुर्वार इत्यत आह बाहुलकादिति । मव्यतेर्यलोपो । मव्य बन्धने अस्मादालप्रत्ययः स्यात्, तस्यापतुडागमः, धातोर्यलोपः, परिशिष्टान्त्यस्य वकारस्य मकारश्चेत्यर्थः । ममापताल इति । ऋजेः कीकन् । ऋज गतौ अस्मात्कीकन्स्यात् । ऋजीक इति । कित्त्वान्न गुणः । तनोतेर्डउः सन्वच्च । तनु विस्तारे अस्माड्ड उप्रत्ययः, स सन्वच्च भवति । तितउरिति । डउप्रत्ययस्य सन्वत्त्वाद् द्वित्वमभ्यासेत्वं डित्त्वाट्टिलोपः । डउगिति पृथगुच्चारणसामर्थ्यान्न गुणः । 'प्रस्फोटनं शूर्पमस्त्री चालनी तितउः पुमान्' इत्यमरकोशः । अर्भकपृथुकपाका वयसि । एते निपात्यन्ते । निपातनप्रकारमेवाह ऋधु

---

शातकुम्भवराटयोः । अक्षये मानभेदे स्यादकुप्ये च नपुंसकम्' इति मेदिनी । कृञः । डुकृञ् करणे । जनेः । तु इत्यविभक्तम् । जनेस्तुप्रत्ययो रेफश्चान्तादेशः स्यात् । ऊर्णोतेः । ऊर्णुञ् आच्छादनेऽस्मात् डः स्याद् डित्वाट्टिलोपः टाप् । 'ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः' इत्यमरः । भ्रुवोर्मध्य य आवर्तस्तत्रेत्यर्थः । 'अन्तरान्तरेण–' इति द्वितीया । दधातेः । डुधाञ् धारणादौ अस्माद्यत् प्रत्ययः स्यात्तस्य नुडागमश्च । 'धान्यं व्रीहिषु धान्याके' इति मेदिनी । जीर्यतेः । जॄ वयोहानावस्मात् क्रिन्स्यात् । 'ॠत इद्धातोः' । रपरत्वम् । रेफस्य वकारादेशः । मव्यतेः । मव्य बन्धने । अन्त्यस्येति । वकारस्येत्यर्थः । ऋजेः । ऋजी गतौ । तनोतेः । तनु विस्तारेऽस्माद् डउः प्रत्ययस्तस्य सन्वद्भावाद् द्वित्वमभ्यासस्येत्वं च डित्वाट्टिलोपः । पृथगुच्चारणसामर्थ्याद् गुणो न । तितउः चालनी । 'सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत' । 'तितउः परिपवनं भवति' इति पस्पशायां भाष्यम् । 'चालनी तितउः पुमान्' इत्यमरः । 'चालनं तितउन्युक्तम्' इति कोशान्तरम् । 'स्याद्वास्तु हिङ्गु तितउ' इति पुंनपुंसकवर्गे त्रिकाण्डशेषः । अर्भक । एते निपात्यन्ते ।

वृद्धौ'। अतो वुन्। भकारश्चान्तादेशः। प्रथेः कुकन् संप्रसारणं च। पिवतेः कन्। ७३२ अवद्यावमाधमार्वरेफाः कुत्सिते। वदेर्नञ्नि यत्। अवद्यम्। अवतेरमः। वस्य पक्षे धः। अवमः अधमः। अर्तेर्वन्। अर्वा। रिफतेस्तौदादिकाद अः। रेफः। ७३३ लीरीङोर्ह्रस्वः पुट् च तरौ श्लेषणकुत्सनयोः। तरौ प्रत्ययौ क्रमात्स्तो धातोर्ह्रस्वः, प्रत्ययस्य पुट। लिप्तं श्लिष्टम्। रिप्रं कुत्सितम्। ७३४ क्लिशेरीच्चोपधायाः कन्लोपश्च लो नाम्च। क्लिशेः कन्स्यादुपधाया इत्वम्, लस्य लोपो नामागमश्च। कीनाशो यमः। कित्त्वफलं चिन्त्यम्। ७३५ अश्नोतेराशुकर्मणि वरट् च। चकारादुपधाया ईत्वम्। ईश्वरः।

---

वृद्धाविति। अस्माद् वुन्, अकादेशः, धकारस्य भकारः, लघूपधगुणः। पृथुक इत्यत्राह प्रथेरिति। प्रथ प्रख्याने, अस्मात्कुकन्, धातोः संप्रसारणेन रेफस्य ऋकारः कित्वान्न लघूपधगुणः। पिवतेरिति। पा पाने इत्यस्मादित्यर्थः। 'पोतः पाकोऽर्भको डिम्भः' 'पृथुकौ चिपिटार्भकौ' इति चामरः। अवद्यावमाधमार्वरेफाः। एते निपात्यन्ते। निपातनमेवाह वदेरिति। वद व्यक्तायां वाचि अस्मान्नञ्नि उपपदे यत्प्रत्यय इत्यर्थः। अवतेरिति। अव रक्षणादौ। अधम इत्यत्राह वस्य पक्षे ध इति। अर्तेरिति। ऋ गतौ। रिफतेरिति। रिफ कत्थनादिषु अस्माद् अप्रत्यय इत्यर्थः। 'निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः' इत्यमरः। लीरीङोर्ह्रस्वः। लीङ् श्लेषणे, रीङ् श्रवणे, आभ्यां तप्रत्ययरप्रत्ययौ क्रमात्स्तः, तस्य पुडागमः, धातोर्ह्रस्वश्चेत्यर्थः, प्रकृतिप्रत्ययसमुदायेन क्रमाच्छ्लेषणे कुत्सने च वाच्ये। क्लिशेरीच्चोपधायाः। क्लिशू विबाधने अस्मात्कन्स्याद् धातोरुपधाया ईत्वम् लकारस्य लोपो नामागमश्च। कीनाश इति। 'कृतान्ते पुंसि कीनाशः' इत्यमरः। चिन्त्यमिति। उपधाया ईत्वविधिसामर्थ्यादेव गुणो न भविष्यतीति भावः। अश्नोतेराशुकर्मणि।

---

निपातनप्रकारमेवाह ऋधु वृद्धावित्यादि। प्रथेरिति। प्रथ प्रख्याने, पा पाने, पिबति स्तनादिकमिति पाकः। 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः। 'अर्भकः कथितो बाले मूर्खेऽपि च कृशेऽपि च। पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत्'। 'पाकः परिणतौ शिशौ। केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च' इति मेदिनी। अवद्या। एते कुत्सिते निपात्यन्ते। वद व्यक्तायां वाचि, अव रक्षणादौ, ऋ गतौ, रिफ कत्थनयुद्धनिन्दाहिंसादानेषु। 'निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः' इत्यमरः। 'कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः' इति च। 'अवमः स्याद्गर्ह्ये ऊनेऽपि' इति मेदिनी। 'अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः। रेफो रवर्णे पुंसि स्यात्कुत्सिते पुनरन्यवत्' इति च मेदिनी। लीरीङोः। लीङ् श्लेषणे, रीङ् श्रवणे। क्रमादिति। श्लेषणे वाच्ये तप्रत्ययः कुत्सिते वाच्ये रप्रत्यय इत्यर्थः। लिप्तं विषाक्ते भुक्ते च वाच्यवत्स्याद्विलेपिते' इति विश्वः। क्लिशेः। क्लिशू विबाधने। नामागमश्च प्रत्ययस्येति शेषः। चिन्त्यमिति। ईत्वविधानसामर्थ्यादेव गुणाभावसिद्धेरिति भावः। 'कीनाशः कर्षकः क्षुद्रोपांशुधुलिषु वाच्यवत्। यमे ना' इति मेदिनी। अश्नोतेः। अशू व्याप्तौ अस्माद्वरट् स्यात्। आशुकर्म वरदानादि-

७३६ चतेरुरन् । चत्वारः । ७३७ प्रा (प्रो) ततेररन् । प्रातः । ७३८ अमेस्तुट् च । अन्तमंध्यम् । ७३९ दहेर्गो लोपो दश्च नः । गप्रत्ययो धातोरन्त्यस्य लोपो दकारस्य नकारः । नगः । ७४० सिचेः संज्ञायां हनुमौ कश्च । सिञ्चतेः कप्रत्ययो हकारादेशो नुम्च स्यात् । सिंहः । ७४१ व्याङि घ्रातेश्च जातौ । कप्रत्ययः स्यात् । व्याघ्रः । ७४२ हन्तेरच् घुर च । घोरम् । ७४३ क्षमेरुपधालोपश्च । चादच् क्षमा । ७४४ तरतेर्ड्रिः । त्रयः । त्रीन् ।

---

अशू व्याप्तौ अस्माद्वरट स्यात्, उपधाया ईत्त्वं च आशुकर्मणि वाच्ये । ईश्वर इति । ईश्वरो हि, प्रार्थितः सन्वरादिकं शीघ्रं दातुं शक्तो भवति । चतेरुरन् । चते याचने अस्मादुरन्स्यात्, उरनि अकार उच्चारणार्थः. नकार इत् । चत्वार इति । चतुरनडुहोरित्याम् । प्राततेररन् । प्रपूर्वादत सातत्यगमने इत्यस्मादरन्प्रत्ययः, अकारः उच्चारणार्थः । प्रातरिति । स्वरादिपाठादव्ययत्वम् अमेस्तुट् च । अम गत्यादिषु अस्मादरन् स्यात्, तस्य तुडागमश्च । दहेर्गो लोपो दश्च नः । दह भस्मीकरणे अस्माद् गप्रत्ययः, धातोरन्त्यस्य लोपः, दकारस्य नकारश्चेन्यर्थः । सिचेः संज्ञायाम् । षिच क्षरणे अस्मात्कप्रत्ययो धातोरन्त्यस्य हकारादेशो नुम् स्यात् । व्याङि घ्रातेश्च जातौ । वि आङित्युपसर्गे उपपदे घ्रा गन्धोपादान इत्यस्मात् कप्रत्ययः स्याद् जातौ वाच्यायाम् । व्याघ्र इति । कित्त्वादातो लोप इटि चेत्यालोपः । हन्तेरच् घुर च । हन हिंसागत्योः अस्मादच्प्रत्ययः, धातोर्घुरादेशश्च । घोरमिति । लघूपध-गुणः । क्षमेरुपधालोपश्च । क्षमूष् सहने अस्मादच्प्रत्ययः धातोरुपधाया लोपश्चेत्यर्थः । 'क्ष्मावनिर्मेदिनी मही' इत्यमरः । तरतेर्ड्रिः । तॄ प्लवनतरणयोः अस्माद्

---

क्रिया यस्य तस्मिन्वाच्ये शीघ्रदातरीत्यर्थः । ईश्वर इति । स्त्रियां तु टित्त्वान्ङीप् ईश्वरी । प्रत्ययस्वरेण मध्योदात्ता । ईशेः वनिपि 'वनो र च' इति ङीब्रयोस्तु धातुस्वरेणाद्युदात्ता । पुंयोगलक्षणे ङीषि अन्तोदात्ता । 'स्थेशभासपिसकसः—' इति वरचि । तदन्ताट्टापि ईश्वरेति विवेकः । 'ईश्वरो मन्मथे शम्भौ नाट्ये स्वामिनि वाच्यवत् । ईश्वरा चेश्वरोमायाम्' इति मेदिनी । ईश्वरा उमायामिति छेदः । 'ईश्वरः शङ्करेऽधीशे तत्पत्न्यामीश्वरीश्वरा इति बोपालितः । 'विन्यस्तमङ्गलमहौषधिरीश्वरायाः' इति भारविः । दशपाद्यां तु सूत्रान्तरमपि 'हन्ते रन् घश्च' इति । हन हिंसागत्योरस्माद्रन्प्रत्ययः स्याद् घश्चान्तादेशः । हन्यते गम्यतेऽतिथिभिरिति घरः गृहम् । चतेः । चते याचनेऽस्मादुरन्स्याद्दकार उच्चारणार्थः । 'चतुरनडुहोरामुदात्तः' इत्याम् । चत्वारः । प्रावतेः । अत सातत्यगमने प्रपूर्वादस्मादरन्स्यात् । रेफादकार उच्चारणार्थः । स्वरादिपाठादव्ययत्वम् । प्रातर् । अमेः । अम गतिशब्दसंभक्तिषु, अस्मादरन्स्यात्तस्य तुडागमश्च । अन्तःशब्दोऽपि प्रातःशब्दवद् अव्ययम् । दहेः । दह भस्मीकरणे । 'नगो महीरुहे शैले भास्करे पवनाशने' इति मेदिनी । सिचेः । षिच क्षरणे हकारादेश इति । धातोरन्त्यस्येत्यर्थः । 'सिंहः कण्ठीरवे राशौ सत्तमे चोत्तरस्थितः । सिंही क्षुद्रबृहत्योः स्याद्वासके राहुमातरि' इति विश्वः । व्याङि । आ गन्धोपादानेऽस्माज्जातौ वाच्यायां कः स्यात् कित्त्वादातो लोपः । 'व्याघ्रः स्यात्पुंसि शार्दूले रक्तैरण्डकरञ्ज योः ।श्रेष्ठे

७४५ ग्रहेरनिः । ग्रहणिः । ङीष् । ग्रहणी व्याधिभेदः । ७४६ प्रथेरमच् । प्रथमः । ७४७ चरेश्च । चरमः । ७४८ मङ्गेरलच् । मङ्गलम् ।

इत्युणादिषु पञ्चमः पादः

---

ङ्रिः स्यात् । त्रिरिति । डित्वाट्टिलोपः । तस्य नित्यं बहुवचनान्तत्वादाह । त्रय इति । ग्रहेरनिः । ग्रह उपादाने अस्मादनिप्रत्ययः । ग्रहणिरिति । अट्कुप्वाङिति णत्वम् । ङीषिति । 'कृदिकारादक्तिनः' इत्यनेन । 'ग्रहणी रुक् प्रवाहिका' इत्यमरः । प्रथेरमच् । प्रथ प्रख्याने अस्मादमच् स्यात् । प्रथम इति रूपम् । चरेश्च । चर गतिभक्षणयोरस्मादमच्स्यात् । प्रथिचरिभ्यामित्येकयोग एव कर्तुं शक्यः । मङ्गेरलच । मगिर्गत्यर्थः । अस्मादलच्प्रत्यय इत्यर्थः । मङ्गलमिति । धातोरिदित्त्वान्नुम्, 'श्वश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः ।

इति सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायाम् उणादिषु पञ्चमः पादः समाप्तः ।

---

नराद्युत्तरस्थः कण्टकायां च योषिति' इति मेदिनी । हन्तेः । हन्तेरक् स्याद्धातोर्घुरादेशश्च । 'घोरं भीमे हरे' इति विश्वः । क्षमेः । क्षमूष् सहने । 'क्षमावनिर्मेदिनी मही' इत्यमरः । तरतेः । तृ प्लवनतरणयोरस्माद् ड्रिः स्यात् । डित्वाट्टिलोपः । ग्रहेः । ग्रह उपादाने । ङीषिति । 'कृदिकारात्' इत्यन्तेन । 'ग्रहणी रुक् प्रवाहिका' इत्यमरः । प्रथेः । प्रथ प्रख्याने । 'प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्' इति मेदिनी । 'प्रथमचरम-' इति वैकल्पिकसर्वनामत्वात्पक्षे जसः शीभावः, प्रथमे प्रथमाः । चरेश्च । चर गतिभक्षणयोरस्मादमच्स्यात् । चरमे चरमाः । योगविभागश्चिन्त्यप्रयोजनः । प्रथिचरिभ्यामित्येव सुवचम् । मङ्गेः । उखउखीत्यादिदण्डके गत्यर्थको मगिः पठ्यते । 'कल्याणं मङ्गलं शुभम्' । मङ्गलो ग्रहभेदः । 'मङ्गला सितदूर्वायामुमायां पुंसि भूमिजे । नपुंसकं तु कल्यणे सर्वार्थे रक्षणेऽपि च' इति मेदिनी । भावे ष्यञि माङ्गल्यम् । 'तत्र साधुः' इति यत् । 'मङ्गल्यः स्यात्त्रायमाणाश्वत्थबिल्वमसूरके । स्त्रियां शम्यामघः-पुष्प्यां मिसि शुक्लवचासु च । रोचनायामथो दध्नि क्लीवं शिवकरे त्रिषु' इति मेदिनी ।

इत्युणादिषु पञ्चमः पादः

उणादिप्रत्ययाः सन्ति पादोत्तरशतत्रयम् । तेषां विवेचनं त्वत्र ज्ञानेन्द्रस्वामिभिः कृतम् ।

प्राचा तु कतिपयानामेवोणादीनामुपन्यासः कृतो न तु सर्वेषां, सोऽप्युपन्यासो नैकप्रघट्टकतया कृतः, किंतु विच्छिद्येति स्पष्टम् । तत्रापि केचित्प्रमादा मनोरमायां प्रदर्शितास्तेष्वेव कांश्चित्प्रमादान्दर्शयामः । 'भजो ण्विः' इति ण्विप्रकरणे 'छन्दसि सहः' 'वहश्च' इत्युपन्यस्य 'परौ व्रजेः षः पदान्ते' इति ण्विस्तेनैव षः परिव्राडित्ययं हि प्राचो ग्रन्थस्तद्व्याख्यायां तत्पौत्रेण पञ्चपाद्युणादिसूत्रे इदं पठ्यते इत्युक्तं तदुभयमपि प्रामादिकम् । 'क्विब्वचि-' इति क्विब्दीर्घौ हि प्रकम्य 'परौ व्रजेः-' इति सूत्रस्य पाठात् । अस्मिन्नंशे पञ्चपादीदशपाद्योरैकवाक्यत्वात् । यदपि प्राचो ग्रन्थे क्वचित्पठ्यते चिणिति तदप्यपाणीनियत्वादुपेक्ष्यम् । एतेन प्रघट्टकान्तरे 'स्तुद्रुपरिव्राजां

दीर्घश्च' इति केचिदिति प्राचो ग्रन्थोऽपि प्रत्युक्तः। सूत्रारूढे सर्वसंमते चार्थे केचिदित्युक्तेः अप्रामाणिकत्वात्। यदपि 'घर्नतिचक्षिङ्क्ष्वपितपिजनियजेरुस इस्' इति पठितं तदप्यनाकरम्। तथा हि जनेरुसिः अर्तिपृवपियजितनिधनितपिभ्यो नित्। एतेर्णिच्च। चक्षेः शिच्चेति सर्वसंमतः पाठः। 'तपूंषि तस्मै वपुषो वपुष्टरम्' इत्यादिमन्त्रेषु आद्युदात्ततयानुकूलश्च। वेदभाष्ये एवमेव स्थितम्। इत्यादयो द्वितीयपादे प्रमादाः। तृतीयपादेऽपि स्तनिदूषिपुषिगदिमदिहृदिभ्यो णेरित्नुचिति प्राचा पठितं तत्र दूषिहृदी केषामपि वृत्तिकृतां ग्रन्थे न पठितौ। दूषयित्नुः ह्लदयित्नुरिति प्रयोगोऽप्याकरे न दृष्टः। स्तनिहृषिपुषिमुदिगदिमदिभ्य इति हि पञ्चपादीपाठः। 'घुषिगन्धिमण्डिजनिगमिभ्यः' इति दशपाद्यामधिकं पठितमित्यन्यदेतत्। यदपि 'श्रुदक्षिस्पृहिगृहिदृजृभ्य आय्यः—' इति पठित्वा दराय्य जराय्य इति प्राचोक्तं तदपि न। दृजृग्रहणस्याकरानारूढत्वात्। यदपि 'जृविशिभ्यां झच्' 'गण्डिमण्डिजनिनन्दिभ्यश्च' इत्युक्त्वा गण्डयतो जनयन्त इत्युदाहृतं प्राचा, यच्च गण्डयन्त इति प्रतीकमुपादाय मेघनामेदमिति व्याख्याय गडि वदनैकदेशे इति व्याख्यातृभिर्विवृतं तत्सर्वं प्रामादिकम्। तथाहि उणादिषु गडीति निरनुषङ्गं पठित्वा गड सेचने इति विवृतम्, 'अयामन्ता—' इति सूत्रे वृत्तिन्यासहरदत्तादिसकलग्रन्थेष्वेवम्, माधवग्रन्थेऽप्येवमेव। युक्तं चैतत्। मेघ इति व्याख्यानं प्रति सेचनार्थस्यैवानुगुणत्वाद् जनेः पाठोऽप्यप्रामाणिकः। जिघातुं पठित्वा जयन्तः पाकशासनिः इति सर्वैर्विवृतत्वात्, जनयन्त इति लक्ष्यस्य कैरपि अप्रदर्शितत्वात्। अप्रसिद्धत्वाच्चेत्यादयस्तृतीयपादे प्रमादाः। अथ चतुर्थे। यदपि कॄगॄस्तॄजागृभ्यः क्विन्। कीर्विः गीर्विः स्तीर्विरिति प्राचोक्तं तदपि लिपिभ्रमप्रत्युक्तमेव। कॄ विक्षेपे, गॄ निगरणे, स्तॄञ् आच्छादने, इति प्राचो ग्रन्थं विवृण्वतामुक्तिरपि मूलाशुद्धयै वाशुद्धा। 'जॄशॄस्तॄजागृभ्यः क्विन्' इति हि पाठ उणादिवृत्तिकृतां माधवादीनां च संमतः। जीविः पशुः। शीर्विर्हिंस्रः। स्तीर्विरध्वर्युरिति च तत्तद्ग्रन्थेषूपपादितम् स्तॄ इत्यस्य दीर्घान्तत्व एव हि 'ॠत इद्धातोः' इतीत्वं लभ्यते न तु ह्रस्वान्तत्वेऽपि, तस्माद्यथाकरमेव हि ग्रहीतुमुचितमिति दिक्। यदपि प्राचोक्तं—'ग्लाज्याहात्वरिभ्यो निः' इति तदप्यनाकरम्। आकरे हि 'वीज्याज्वरिभ्यो निः' इति पठित्वा सूत्रद्वयानन्तरं 'वहिश्री—' इति सूत्रे 'ग्लाहात्वरिभ्यो नित्' इति सूत्रितत्वात्। 'तूर्णी रथः सदानवः' इत्यादावाद्युदात्तदर्शनाच्च। नच 'स्त्रियां क्तिन्' इत्यधिकारस्थं वार्तिकमेवेदं प्राचोदाहृतं न तूणादिसूत्रस्थमिति वाच्यम्। एवमपि त्वरतेः पाठस्यानुचितत्वात्। न ह्यसौ वार्तिकेऽस्तीति दिक्। एवं संस्त्याने स्त्यायतेड्ड्रट् इत्यपि प्राचोदाहृतमनाकरम्। स्त्यायतेड्रॅडित्येव सूत्रस्याकरे पञ्चपाद्यां दशपाद्यां चोपलम्भात्। 'संस्त्याने स्त्यायतेड्रॅट् स्त्री सूतेः सप्रसवे पुमान्' इति भाष्ये लोकपाठः स एव माधवेनोपन्यस्तः न तु सूत्रपाठस्य तथात्वं दृश्यते, एवं तद्ग्रन्थव्याख्यातॄणामपि प्रमादा ऊह्याः। तद्यथा पाणिन्यादिमुनीनिति व्याचक्षाणैरुक्तम् 'मनेरुच्चोपधायाः' इति, न ह्येवंविधं सूत्रं पञ्चपाद्यां दशपाद्यां वास्ति, अत इत्यनुवर्तमाने 'मनेरुच्च' इत्येव सूत्रितत्वादिति दिक्। इति चतुर्थपादे प्राचः प्रमादाः।

## अथ उत्तरकृदन्तप्रकरणम् ८८

३१६९ उणादयो बहुलम् । (३—३—१) एते वर्तमाने संज्ञायां च बहुलं स्युः । केचिदविहिता अप्यूह्याः । 'संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे । कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु' (भाष्यम्) । ३१७० भूतेऽपि

---

अथ उत्तरकृदन्तप्रक्रिया निरूप्यन्ते । उणादयो बहुलम् । तृतीयेऽध्याये तृतीयपादस्येदमादिमं सूत्रम् । वर्तमाने संज्ञायां चेति । 'वर्तमाने लट्' इत्यतः 'पुवस्संज्ञायाम्' इत्यतश्च तदनुवृत्तेरिति भावः । अत एव नञि हन एह च नञ्पूर्वाद्धन्तेरसिप्रत्यये प्रकृतेः एहादेशे व्युत्पन्नः अनेहस्शब्दो वर्तमानकाल एवेत्युक्तं भाष्ये। संज्ञाशब्दश्चात्र रूढशब्दपरः वैदिकानामपि शब्दानामुपलक्षणम् । अत एव 'नैगमरूढिभवं हि सुसाधु' इति वार्तिकम् । वैदिका रूढशब्दाश्चौणादिका इति भाष्यं च संगच्छते । रूढाश्चैते उणादिप्रत्ययान्ता अवयवार्थशून्या असन्तमप्यवयवार्थमाश्रित्य प्रायः कर्तरि व्युत्पाद्याः । उणादयो वेत्यनुक्त्वा बहुलग्रहणस्य प्रयोजनमाह । केचिदविहिता अप्यूह्या इति । तदेवाह संज्ञास्वित्यादि । भाष्यस्थोऽयं श्लोकः । डित्थो डिवित्थ इत्यादौ धातुरूपाणि प्रत्ययाश्च यथासंभवमूह्याः । गुणनिषेधादिकार्यवशाद् अनूबन्धं विद्यात् । अनूबन्धमित्यत्र 'उपसर्गस्य घञ्यमनुष्ये—' इति दीर्घः । एतद् उणादिषु शास्त्रं शासितव्यम् । 'कृवापाजि—' इत्यादिसूत्राणि तु शाकटायनप्रणीतानि, अस्यैव बहुलग्रहणस्य प्रपञ्च इत्यर्थः । भूतेऽपि दृश्यन्ते । उणादय इति शेषः । वर्तमानाधिकारादिदं भूतग्रहणम् । दृशिः प्रयोगानुसारार्थः । इदं सूत्रं बहुलग्रहणप्रपञ्चार्थम् ।

---

उणादयो बहुलम् । 'वर्तमाने लट्' इत्यतो वर्तमानग्रहणं 'पुवः संज्ञायाम्' इत्यतः संज्ञाग्रहणं चानुवर्तते तदाह एते इति । अत्र हि सूत्रे 'धातोः' 'प्रत्ययः' 'कृदतिङ्' इति चानुवर्तते, तेन 'कृवापाजिमि—' इत्यादिना विहितानामष्टाध्यायीवहिर्भूतानामप्युणादीनां प्रत्ययसंज्ञा कृत्संज्ञा च सिध्यति । तथा चोणादिप्रत्ययाः सर्वे धातोः परत्र 'कर्तरि कृत्' इति कर्त्रर्थे भवन्ति । उणादिप्रत्ययान्तस्य 'कृत्तद्धित—' इति प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिरित्यादिसर्वमपीष्टं सिध्यति । अपरिपूर्णानामुणादीनां परिपूरणार्थं बहुलग्रहणम् । तस्य फलमाह केचिदविहिता अपीति । हृषेरुलज्विहितः स तु शङ्केरपि भवति शङ्कुलेति प्रयोगदर्शनात् । किंच फिडफिड्डप्रत्ययौ कुत्रापि न विहितौ अत ऊह्येते ऋफिडः ऋफिड्डः इति तयोः कित्त्वं च कल्प्यते । तथा षण्ढ इत्यत्र सत्वाभावश्चेत्यादि । संज्ञास्विति । अनादिसंज्ञास्वेव न तु सर्वास्वित्याहुः । 'हृषेरुलच्' इति प्रत्ययं दृष्ट्वा शङ्किः प्रकृतिरुह्यते । शङ्कुलेति सिद्धम् । ऋ गतावित्यादिभ्यः फिडफिड्डादिप्रत्यया गृह्यन्ते । कार्याद्विद्यादिति । ऋफिड इत्यादौ गुणप्रतिषेधादिकार्यानुरोधादनुबन्धं ककारादिकं विद्यात् । अनूबन्धमित्यत्र 'उपसर्गस्य घञि—' इति दीर्घः । एतदुणादिषु शास्त्रं शासितव्यमित्यर्थः । भूतेऽपि दृश्यन्ते । नन्वेवं वर्तमानग्रहणं च 'उणादयो बहुलम्' इत्यत्र नानुवर्त्यताम् । एतच्चोत्तरसूत्रं च त्यज्यताम् । अविशेषेण कालत्रयेऽपि प्रत्ययलाभादिति चेदत्राहुः—बाहुल्येन वर्तमाने

दृश्यन्ते (३—३—३) ३१७१ भविष्यति गम्यादयः (३—३—३) ३१७२ दाशगोघ्नौ संप्रदाने । (३—४—७३) एतौ संप्रदाने कारके निपात्येते। दाशन्ति तस्मै दाशः । गां हन्ति तस्मै गोघ्नोऽतिथिः । ३१७३ भीमादयोऽपादाने । (३—४—७४) भीमः । भीष्मः । प्रस्कन्दनः । प्रपतः । मूर्खः खलतिः । ३१७४ ताभ्यामन्यत्रोणादयः । (३—४—७५) संप्रदानापादानपरामर्शार्थं ताभ्यामिति । ततोऽसौ भवति तन्तुः । वृत्तं तदिति वर्त्म । चरितं तदिति चर्म । ३१७५ तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् (३—३—१०) क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति । कृष्णं दर्शको याति । अत्र वाऽसरूपेण तृजादयो न । पुनर्ण्वुलुक्तेः ।

---

भविष्यति गम्यादयः । भविष्यति काले गम्यादयः शब्दा इनिप्रत्ययान्ता निपात्यन्त इत्यर्थः । ग्रामङ्गमीति निपातनान्नात्र णित्त्वम् । गमिष्यन्नित्यर्थः । प्रस्थायी प्रस्थास्यमान इत्यर्थः । तुमुन्ण्वुलौ । क्रियार्थायामिति । क्रियोद्देशभूतक्रियावृत्तिधातौ उपपदे इत्यर्थः । भविष्यतीत्यनुवर्तते । तुमुनि नकार इत्, मकारादुकार उच्चारणार्थः । ण्वुलि णलावितौ, वोरकादेशः । मान्तत्वादिति । तुमुनो मान्तकृत्वाद् 'कृन्मेजन्तः' इत्यव्ययत्वमित्यर्थः । ततश्च 'अव्ययकृतो भावे' इति वचनाद्भावे तुमुन् । ण्वुल् तु कर्तर्येव । कृष्णं द्रष्टुमिति । 'न लोकाव्यय–' इति न षष्ठी । कृष्णकर्मकभविष्यद्दर्शनार्थं यानमित्यर्थः । अत्र यातीत्युपपदम् । अत्र तुमुन्प्रत्ययप्रकृत्यर्थस्य दर्शनस्य यानार्थत्वं तुमुना द्योत्यं वाच्यं वा । कृष्णं दर्शको यातीति । कृष्णं द्रक्ष्यन् तदर्थं यातीत्यर्थः । 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति न षष्ठी । ननु तुमुनो भावार्थकत्वे तद्विषये कर्तरि विहितानां तृजादीनामप्रवृत्तावपि

---

भवन्ति, भूतभविष्यतोस्तु क्वचिदेवेति विवेकप्रदर्शनार्थमिति । भविष्यति गम्यादयः । गमिष्यतीति गमी ग्रामम् । आगमिष्यतीति आगामी । गमेरिनिः । 'आङि णित्' इत्याङ्पूर्वस्य तु णित्त्वादुपधावृद्धिः । भीमः । भीष्म इति । 'भियो हेतुभये षुक्' इति मप्रत्ययसंनियोगेन वैकल्पिकः षुक् । प्रस्कन्दत्यस्मादिति प्रस्कन्दनः । अपादाने ल्युट् । प्रपतत्यस्मादिति प्रपतः, पचाद्यच् । मुह्यत्यस्मादिति मूर्खः । 'मुहेः खो मूर्च' स्खलत्यस्मादिति खलतिर्निष्केशशिरा इति प्रागुक्तम् । ताभ्यामिति । ताभ्यामित्यनुक्तौ तु संनिहितापादानस्यैव परामर्शादपादानादन्यत्रेत्यर्थः स्यादिति भावः । ततोऽसाविति । तनोतेः कर्तरि क्तः । 'अनुदात्तोपदेश–' इत्यनुनासिकलोपः । असौ ततो भवति विस्तृतो भवतीत्यर्थे तनोतेस्तुन् । वृत्तमिति । गमनादिना निष्पन्नं यत्तद्वर्त्म । वृत्तेः कर्मणि मनिन् । 'अयनं वर्त्ममार्गाध्व–' इत्यमरः । तुमुन्ण्वुलौ । क्रिया अर्थः प्रयोजनं यस्या सा क्रियार्था तस्याम् । अत्रेदं बोध्यम्—तुमुन्ण्वुलोः कृत्त्वाविशेषेऽपि 'अव्ययकृतो भावे' इति वचनाद्भावे तुमुन् । ण्वुल् तु कर्तरि क्रियायामिति सप्तमीनिर्देशात्तद्वाचकस्य यातीत्यादेः 'तत्रोपपदं सप्तमीस्थम्' इत्युपपदत्वमिति । कृष्णं द्रष्टुमिति । कृष्णकर्मकं भविष्यद्दर्शनं तत्प्रयोजकं यानमित्यर्थः । कृष्णं दर्शक इति । कृष्णकर्मकभविष्यद्दर्शनकर्तृकर्तृकं दर्शनप्रयोजनकं च यानमि-

३१७६ समानकर्तृकेषु तुमुन् । (३-३-१५८) अक्रियार्थोपपदार्थमेतत् । इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुमुन्स्यात् । इच्छति भोक्तुम्, वष्टि वाञ्छति वा । ३१७७ शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् । (३-४-६५) एषूपपदेषु धातोस्तुमुन्स्यात् । शक्नोति भोक्तुम् । एवं धृष्णोतीत्यादौ ।

---

ण्वुल्विषये कर्तरि तृजादयः कुतो न स्युः । न च विशेषविहितेनानेन ण्वुला तृजादयो बाध्यन्त इति वाच्यम् । वासरूपविधिना तद्बाधस्य पाक्षिकत्वादित्यत आह अत्रेति । क्रियार्थक्रियोपपदे विषये वासरूपविधिना पक्षे प्राप्ताः ये तृजादयस्ते न भवन्तीत्यर्थः । आदिना 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इत्यादिसंग्रहः । कुतोऽत्र तृजादयो नेत्यत आह पुनर्ण्वुलुक्तेरिति । 'ण्वुल्तृचौ' इति कालसामान्ये कर्तरि विहितो ण्वुल् क्रियार्थक्रियोपपदे विषये भवतीति पुनरिह ण्वुल्विधानात् तदितरतृजादयो न भवन्तीति विज्ञायत इति भावः । समानकर्तृकेषु । 'तुमुन्ण्वुलौ क्रियायाम्–' इत्येव सिद्धे किमर्थमिदमित्यत आह अक्रियार्थेति । इच्छार्थेष्विति । 'इच्छार्थेषु लिङ्लोटौ' इत्यतस्तदनुवृत्तेरिति भावः । इच्छति भोक्तुमिति । अत्र इच्छतीत्युपपदार्थस्य इच्छाया भोजनोद्देश्यत्वाभावेऽपि तुमुन् इच्छार्थेष्वित्यर्थग्रहणस्य प्रयोजनमाह वष्टि वाञ्छति वेति । यद्यपि वशेः छान्दसेषु परिगणनं धातुपाठे । तथापि 'वष्टि भागुरिः–' इति वार्तिकप्रयोगात् लोकेऽपि प्रयोग इति भावः । शकधृष । 'शकधृषज्ञा–' इति सूत्रमप्यक्रियोपपदार्थम् । शक्नोति भोक्तुमिति । अत्र शक्तेर्भोजनोद्देश्यत्वाभावेऽपि तुमुन् । एवमिति । धृष्णोति जानाति ग्लायति घटते

---

त्यर्थः । क्रियायां किम्, भिक्षिष्ये इत्यस्य जटाः । इह भिक्षार्था जटाः ताश्च द्रव्यं न तु क्रिया, भिक्षितुं जटा इति प्रयोगस्तु धारयतीत्यध्याहारेण समर्थनीयः । क्रियार्थायां किम् । धावतस्ते पतिष्यति दण्डः । अस्त्यत्र धावत इति क्रिया न त्वसौ दण्डपतनार्था । धावनं तु दण्डपतने हेतुर्भवति न तूद्देश्यमिति दिक् । समानकर्तृकेषु । अक्रियार्थेति । भोक्तुमिच्छतीत्यत्र भोजनविषयिणीच्छेति प्रतीयते न तु भोजनार्थेच्छेति । अतः पूर्वेणात्राप्राप्तिरिति भावः । सूत्रस्थसमानशब्द एकतावचन इत्याह एककर्तृकेष्विति । एकेति किम्, पुत्रस्य पठनमिच्छतीति । पुत्रस्येति कर्तरि षष्ठी । पुत्रकर्तृकं पठनमित्यर्थः । इह सूत्रे समानकर्तृकेति पदाभावे पुत्रस्य पठितुमिच्छतीति प्रयोगः स्यात् । देवदत्तं भुञ्जानमिच्छतीति काशिका । अत्र काशिकायामुक्तम् इच्छन् करोतीत्यत्रानभिधानान्नेति । अत्र निष्कर्षमाहुः—उक्तविषये इच्छन्कर्तुमिति प्रयोगाभावेऽपि इच्छन् कर्तुं गच्छतीत्यादौ तु 'तुमुन्ण्वुलौ–' इति सूत्रेण स्यादिति । तच्चिन्त्यम् । करोतीत्यर्थे तुमुनः प्राप्तेरेवाभावात् । तस्य भावार्थकत्वात् । इह च लटा कर्तृप्रतीतेः । किंचेच्छन्कर्तुमिति प्रयोगो नेष्यते इति रिक्तं वचः, कर्तुमिच्छन्निति प्रयोगस्य सकलसंमतत्वात् । पदानुपूर्व्याश्चाहर पात्रं पात्रमाहरेत्यादाविव स्वेच्छायत्तत्वात् । विस्तरस्त्विह मनोरमादावनुसन्धेयः । वष्टीति । वश कान्तौ कान्तिरिच्छेति वशधातुरपीच्छार्थकः । शकधृष । अक्रियार्थोपपदार्थं आरम्भः । भोक्तुं शक्नोति धृष्णोति जानाति इत्यत्र हि भुज्यर्थो विषयतया संबध्यते, नैपुण्यं च गम्यते ।

अयंग्रहणमस्तिनैव संबध्यते, अनन्तरत्वात् । अस्ति भवति विद्यते वा भोक्तुम् । ३१७८ पर्याप्तिवचनेष्वलमर्थेषु । (३-४-६६) पर्याप्तिः पूर्णता । तद्वाचिषु सामर्थ्यवचनेषूपपदेषु तुमुन्स्यात् । पर्याप्तो भोक्तुम्, प्रवीणः कुशलः पटुरित्यादि । पर्याप्तिवचनेषु किम्—अलं भुक्त्वा । अलमर्थेषु किम्—पर्याप्तं भुङ्क्ते । प्रभूततेह गम्यते न तु भोक्तुः सामर्थ्यम् । ३१७९ कालसमयवेलासु तुमुन् । (३-३-१६७) पर्यायोपादानमर्थोपलक्षणार्थम् । कालार्थेषूपपदेषु तुमुन्स्यात् । कालः समयो वेला अनेहा वा भोक्तुम् । प्रैषादिग्रहणमिहानुवर्तते, तेनेह न—'भूतानि कालः पचतीति वार्ता' । ३१८० भाववचनाश्च । (३-३-११) । भाव इत्यधिकृत्य वक्ष्यमाणा घञादयः क्रियार्थायां क्रियायां भविष्यति स्युः । यागाय याति । 'तुमर्थात्—' (सू. ५८२) इति चतुर्थी । ३१८१ अण्कर्मणि च । (३-३-१२)

---

आरभते लभते क्रमते उत्सहते अर्हति वा भोक्तुमित्युदाहार्यम् । अस्तिनैवेति । न तु शकादिनेत्यर्थः । कुत इत्यत आह अनन्तरत्वादिति । संनिहितत्वादित्यर्थः । पर्याप्तिवचने । पर्याप्ति इत्यस्य विवरणम् पूर्णतेति । अलमर्थेष्वित्यस्य विवरणम् सामर्थ्यवचनेष्विति । पर्याप्तो भोक्तुमिति । अन्यूनसामर्थ्यवानित्यर्थः । वचनग्रहणस्य फलमाह प्रवीण इत्यादि । अलं भुक्त्वेति । अत्र अलमिति प्रतिषेधार्थकम् । न तु पर्याप्त्यर्थमिति भावः । पर्याप्तं भुङ्क्ते इति । बहुलमन्नं भुङ्क्ते इत्यर्थः । प्रभूततेति । अन्नस्येति शेषः । कालसमयवेलासु । अक्रियोपपदेऽपि प्रवृत्त्यर्थमिदम् । ननु कालपर्यायाणां कतिपयानां ग्रहणात्तदितरस्मिन् अनेहा आदिशब्दे उपपदे न स्यादित्यत आह पर्यायोपादानमर्थोपलक्षणार्थमिति । अनुवर्तत इति । प्रैषातिसर्गसूत्रादिति भावः । भूतानीति । पृथिव्यादिपञ्चभूतानि कालः पचति उपचयापचयादिविकारं प्रापयति इति वार्ता लोकवृत्तान्त इत्यर्थः । भाववचनाश्च । क्रियार्थायां क्रियायामिति भविष्यतीति चानुवर्तते । भावे चेत्येव सिद्धे वचनग्रहणस्य प्रयोजनमाह भाव इत्यधिकृत्येति । भावे इत्यधिकृत्य घञादयो विधास्यन्ते ये सामान्यतः ते क्रियार्थायां क्रियायाम् उपपदे भविष्यति काले विशेषविहितेनापि तुमुना समुच्चिता भवन्तीत्यर्थः । न च वाऽसरूपविधिना सिद्धमेतदिति शङ्क्यम्, 'क्तल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्ति' इत्युक्तेरिति भावः । ननु यागाय यातीत्यत्र यागस्य संप्रदानत्वाभावात् कथं चतुर्थी । नापि तादर्थ्यचतुर्थी, तादर्थ्यस्य प्रत्ययेनैव लाभादित्यत आह तुमर्थाच्चेति । अण् कर्मणि च ।

---

ग्लायति भोक्तुमित्यत्र भोजनविषयिण्यशक्तिर्गम्यते । भोक्तुं घटते इत्यत्र तु भोक्तुमर्हतीति योग्यता । आरभते भोक्तुमित्यत्र भोक्तुं प्रक्रमते उत्सहते इति भुजेराद्यावस्था । लभते इत्यत्राप्रत्याख्यानमस्ति भोक्तुमित्यादौ तु संभवमात्रम् । पर्याप्तो भोक्तुमिति । भोक्तुं समर्थ इत्यर्थः । उपलक्षणार्थमिति । तस्य फलमाह अनेहेति । 'कालो दिष्टोऽप्यनेहापि' इत्यमरः । तेनेह नेति । अनुवादेन न भवतीत्यर्थः । यागायेति । यष्टुमित्यर्थः । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी ।

कर्मण्युपपदे क्रियार्थायां क्रियायां चाण्स्यात् । ण्वुलोऽपवादः । काण्डलावो व्रजति । परत्वादयं कादीन्बाधते । कम्बलदायो व्रजति । ३१८२ पदरुजविशस्पृशो घञ् । (३-३-१६) भविष्यतीति निवृत्तम् । पद्यतेऽसौ पादः । रुजतीति रोगः । विशतीति वेशः । स्पृशतीति स्पर्शः । ३१८३ सृ स्थिरे । (३-३-१७) सृ इति लुप्तविभक्तिकम् । स्थिरे कर्तरि सर्तेः घञ्स्यात् । सरति कालान्तरमिति सारः । 'व्याधिमत्स्यबलेषु चेति वाच्यम्' (वा. २१७४) ।

---

चकारेण क्रियार्थायां क्रियायामिति समुच्चीयते, तदाह क्रियार्थायां क्रियायां चेति । तथा च क्रियार्थायां क्रियायां कर्मणि चेत्युपपदद्वये सत्येवास्य प्रवृत्तिः नान्यतरस्मिन्निति भाष्ये स्पष्टम् । कर्त्रर्थकोऽयमण्, कर्तरि कृदित्यधिकारात् । अत्र 'ण्वुल्तृचौ' इति बाधित्वा 'कर्मण्यण्' इति सामान्यविधिना अण प्राप्तः, तं तावत्क्रियार्थायां क्रियायामुपपदे विशेषविहितस्तुमुन्ण्वुलाविति ण्वुल बाधितुमुद्युङ्क्ते, पुनर्ण्वुल्विधिसामर्थ्येन वाऽसरूपविधेरत्राप्रवृत्तेरुक्तत्वात् । तमिमं ण्वुलं बाधितुमयमण्विधिः । तदाह ण्वुलोऽपवाद इति । 'तुमुन्ण्वुलौ' इति विहितस्य ण्वुलोऽपवाद इत्यर्थः । एवं च ण्वुला बाधितस्य 'कर्मण्यण्' इत्यस्य अयमण्विधिः प्रतिप्रसवार्थ इति स्थितम् । ननु ण्वुला बाधितस्याणः प्रतिप्रसवेऽपि 'आतोऽनुपसर्गे–' इति कप्रत्ययः कम्बलदायो व्रजतीत्यत्र दुर्निवारः, कप्रत्ययस्य कर्मण्यणपवादत्वात् सरूपत्वेन च वाऽसरूपविध्यप्रवृत्तेः । न चायं वैशेषिकोऽण्विधिः कप्रत्ययस्याप्यपवाद इति शङ्क्यम्, न ह्ययमपूर्वोऽण्विधिः, किंतु लाघवात 'कर्मण्यण्' इत्यणेवात्र प्रतिप्रसूयते । स च 'कर्मण्यण्' इत्यण् सामान्यविहितः 'आतोऽनुपसर्गे कः' इति वैशेषिकस्य नापवादः, प्रत्युत कप्रत्यय एव तदपवादः । अतः कम्बलदायो व्रजतीत्यत्र कर्मण्यणपवादं तुमुन्ण्वुलाविति ण्वुलं बाधित्वा कप्रत्ययः स्यादित्यत आह परत्वादयं कादीन् बाधत इति । आदिना सामगो गुरुकुलं व्रजतीत्यादौ गापोष्टगित्यादिसंग्रहः । अण्कर्मणि चेति ह्यावर्तते । प्रतिप्रसवविधिरपूर्वविधिश्च । तत्र प्रतिप्रसवविधिना ण्वुला अणो बाधनिवृत्तिः । अपूर्वविधिविहितस्य त्वणः तृतीयपादीयस्य द्वितीयपादस्थकप्रत्ययापेक्षया परत्वात् कादिप्रत्यया अणा अनेन बाध्यन्त इत्यर्थः । एतच्च भाष्ये स्पष्टम् । इत ऊर्ध्वम् 'लृट् शेषे च' इत्यादिसूत्रेषु क्रियार्थायां क्रियायामिति निवृत्तम् । भविष्यतीत्येवानुवर्तते इति बोध्यम् । पदरुज । कर्तरीत्येव । पद्यतेऽसाविति । करणस्याप्यत्र विवक्षातः कर्तृत्वम् । 'एरच्' इत्यतः प्राग् घञधिक्रियते । सृ स्थिरे । लुप्तविभक्तिकमिति । लुप्तपञ्चमीकमित्यर्थः । स्थिरे कर्तरीति । स्थिरे इति कर्तृविशेषणम् । न तूपपदमिति भावः । सर्तेरिति । भ्वादेर्जुहोत्यादेश्च ग्रहणम्, न तु जुहोत्यादेरेव, व्याख्यानात्, तदाह सरति कालान्तरमिति सार इति । अर्चर्चादिपाठात्

---

ण्वुलोऽपवाद इति । 'अव्ययकृतो भावे' इति भावे विहितत्वात्तुमुनः प्राप्तिरेव नास्तीति भावः । पदरुज । पद्यतऽसाविति । करणस्य कर्तृविवक्षात्र बोध्या । पद्यते गच्छति येनेति फलितोऽर्थः । सृ स्थिरे । सर्तेरिति भ्वादेर्जुहोत्यादेश्च ग्रहणं स्थिरग्रहणम्, प्रत्ययार्थस्य कर्तृविशेषणं न तूपपदमिति ध्वनयन्नाह स्थिरे कर्तरीति ।

अतीसारो व्याधिः। 'उपसर्गस्य–' इति दीर्घः, अन्तर्भावितण्यर्थोऽत्र सरतिः। रुधिरादिकमतिशयेन सारयतीत्यर्थः। विसारो मत्स्यः। 'सारो बले दृढांशे च'। ३१८४ भावे। (३–३–१८) सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ्स्यात्। पाकः, पाको। ३१८५ स्फुरतिस्फुलत्योर्घञि। (६–१–४७) अनयोरेच आत्वं स्याद्घञि। स्फारः। स्फालः। 'उपसर्गस्य घञि–' (सू० १०४४) इति दीर्घः। परीहारः। 'इकः काशे' (सू० १०४५)। काशे उत्तरपदे इगन्तस्यैव प्रादेर्दीर्घः स्यात्। नीकाशः। अनूकाशः। इकः किम्–प्रकाशः। 'नोदात्तोपदेश–' (सू० २७६३) इति न वृद्धिः। शमः। आचमास्तु आचामः। कामः। वामः। विश्राम इति त्वपाणिनीयम्। ३१८६ अकर्तरि च कारके संज्ञायाम्। (३–३–१९) कर्तृभिन्ने कारके घञ् स्यात्। ३१८७ घञि च भावकरणयोः। (३–४–२७) रञ्जेर्नलोपः स्यात्। रागः। अनयोः किम्–रज्यत्यस्मिन्रङ्गः।

पुंस्त्वं क्लीवत्वं च। अत एव च स्थिर इति नोपपदम्। व्याधीति। वार्तिकमस्थिरार्थम्। सारो बल इति। भाष्ये तु बले खदिरसार इत्युदाहृतम्। भावे। भावो भावना क्रिया, सा च धातुत्वेन सकलधातुवाच्येत्यादिमूलव्याख्यावसरे, सर्वधातुवाच्यं क्रियासामान्यं तद्विशेषः पाकादिश्च धातुविशेषवाच्यः, तत्र क्रियासामान्यं भावशब्दार्थः, तिङ्वाच्यं लिङ्गसंख्यान्वयायोग्यं साध्यावस्थापन्नम्, कृद्वाच्यं तु लिङ्गसंख्यान्वययोग्यं सिद्धावस्थापन्नम्, 'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति भाष्यादिति प्रपञ्चितम्, तदाह सिद्धावस्थापन्न इत्यादिना। घञिति। 'पदरुज–' इत्यतस्तदनुवृत्तेरिति भावः। इकः काशे। उत्तरपदे इति। 'अलुगुत्तरपदे' इत्यतस्तदनुवृत्तेरिति भावः। 'ढ्रलोपे पूर्वस्य–' इत्यतो दीर्घ इत्यनुवर्तते। 'उपसर्गस्य घञ्यमनुष्ये–' इत्यतो घञीति। तेनैव सिद्धे नियमार्थमिदम्, तदाह इगन्तस्यैवेति। दीर्घः स्यादिति। घञीति शेषः। आचाम इति। अनाचमेरिति पर्युदासान्न वृद्धिनिषेध इति भावः। अपाणिनीयमिति। 'नोदात्तोपदेशस्य–' इति वृद्धिनिषेधादिति भावः। अकर्तरि। कारके इति प्रत्ययार्थनिर्देशः, न तूपपदम्, व्याख्यानात्। संज्ञाशब्देन रूढिर्विवक्षिता। तेन राग इति वक्ष्यमाणमुदाहरणं संगच्छते। घञि। 'अनिदिताम्–' इति नलोपप्रकरणे 'रञ्जेश्च' इत्युत्तरमिदं सूत्रम्, तदाह रञ्जेर्नलोपः स्यादिति। सूत्रे शेषपूरणमिदम्। राग इति। 'चजोः कु

अर्धर्चादिषु सारशब्दपाठोऽत्र मानम्। व्याधीत्यादि। अस्थिरार्थमिदं वचनम्। तेन विसारो मत्स्य इत्यत्र विविधं सरतीत्यर्थः संगच्छते। अतीसार इति। 'उपसर्गस्य घञि–' इति दीर्घः। सारो बले इति। अत्रापि सृधातुरन्तर्भावितण्यर्थः। सारयति चेष्टयतीत्यर्थानुरोधात्। बलवानेव हि चेष्टते। सिद्धावस्थापन्न इति। पचतीत्यादौ तु साध्यावस्थापन्नो धात्वर्थ इति भावः। आचामेति। 'नोदात्त–' इति सूत्रे अनाचमेरित्युक्तत्वादिति भावः। तत्रैव सूत्रेऽनाचमिकमिवमीनामिति वार्तिकाद् वृद्धिनिषेधो नेत्याह। कामो वाम इति। अपाणिनीयमिति। श्रमेरुदात्तोपदेशत्वाद् घञि, वृद्धेर्दुर्लभत्वात्। यदि तु 'धुर्यान्विश्रामयन्' इत्यादिवण्णिचि वृद्धिमा-

प्रास्यत इति प्रासः । संज्ञायाम् इति प्रायिकम् । को भवता लाभो लब्धः । इत उत्तरं 'भावे' 'अकर्तरि कारके' इति 'कृत्यल्युटो बहुलम्' ( सू० २८४१ ) इति यावद् द्वयमप्यनुवर्तते । ३१८८ स्यदो जवे । ( ६-४-२८ ) स्यन्देर्घञि नलोपो वृद्ध्यभावश्च निपात्यते । स्यदो वेगः । अन्यत्र स्यन्दः । ३१८९ अवोदैधौद्मप्रश्रथहिमश्रथाः । ( ६-४-२९ ) अवोदः अवक्लेदनम् । एध इन्धनम् । ओद्म उन्दनम् । श्रन्थेर्नलोपो वृद्ध्यभावश्च । प्रश्रथः । हिमश्रथः । ३१९०

---

घिण्यतोः' इति जस्य गः, नलोपे कृते उपधावृद्धिः । रञ्जनक्रियेत्यर्थः रञ्जनद्रव्यं वा । प्रास्यत इति । प्रपूर्वाद् 'असु क्षेपणे' इत्यस्माद् 'अकर्तरि च' इति करणे घञि प्रास इति रूपमित्यर्थः । प्रास्यन्ते क्षिप्यन्ते शत्रवोऽनेनेति प्रास आयुधविशेषः । प्रायिकमिति । स्पष्टमिदं भाष्ये । ततश्च असंज्ञायामपि क्वचिदयं घञ् भवतीति भावः, तदाह को भवतेति । लाभ इति । भावे घञ् । कः लाभः हिरण्यादिप्राप्तिरूपः लब्धः सम्पन्न इत्यर्थः । भवतेत्यस्य लब्ध इत्यत्रान्वयाद् 'नलोक–' इति षष्ठीनिषेधः । अनुवर्तत इति । अत्र व्याख्यानमेव शरणम् 'स्यन्दू प्रस्रवणे' इत्यस्माद् 'अकर्तरि च–' इति घञि क्ङिदभावाद् 'अनिदिताम्–' इति नलोपो न प्राप्तः । तत्र स्यन्देश्चेत्युक्तौ यद्यपि नलोपः सिध्यति । तथापि कृते नलोपे उपधावृद्धिः स्यात् । तत्र नलोपमुपधावृद्ध्यभावं च प्रापयितुमाह स्यदो जवे । स्यदो वेग इति । वेगे रूढोऽयम । अन्यत्रेति । प्रस्रवणे इत्यर्थः । अवोदैधौद्म । अवोद, एध, ओद्म, प्रश्रथ, हिमश्रथ, एषां द्वन्द्वः । अवोद इति । घञि नलोपो निपात्यते । कृते नलोपे आद्गुणः । लघूपधगुणस्तु न भवति । 'न धातुलोपे–' इति निषेधात् । एध इति । 'ञि इन्धी दीप्तौ' इत्यस्माद् घञि नलोपः, 'न धातुलोप–' इति निषेधं बाधित्वा गुणश्च निपात्यते । ओद्म इति । उन्देरौणादिके मन्प्रत्यये नलोपो गुणश्च निपात्यते । श्रन्थेरिति । प्रपूर्वस्य हिमपूर्वस्य च घञीति शेषः ।

---

श्रित्य णिजन्तादेरच् क्रियते तदा रूपं सिध्यति । न च णिच्यपि वृद्धिनिषेधः शङ्क्यः । 'नोदात्त–' इत्यत्र कृतीत्यनुवृत्त्या णिचि निषेधाभावात् । न चैवमपि 'मितां ह्रस्वः' इति ह्रस्वः स्यादिति शङ्क्यम्, वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणेन ह्रस्वाभावसिद्धेः । परन्तु णिजन्तकल्पनायामर्थो भिद्यत इति भावः । वस्तुतस्तु निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिति विवक्षायां तु न दोष इत्यवधेयम् । एवं च 'रोगी चिरप्रवासी परान्नभोजी परावसथशायी । यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः ।।' इत्यादिकविप्रयोगाः साधव एवेति बोध्यम् । अवोदै । अवोद इति । उन्दी क्लेदनेऽवपूर्वः । घञि नलोपो निपात्यते । एध इति । इन्धेर्घञि नलोपो गुणश्च निपात्यते । न धातुलोप–' इति निषेधादप्राप्तगुणस्य निपातनमिति ज्ञेयम् । ओद्म इति । उन्देरौणादिके मन्प्रत्ययो नलोपो गुणश्चात्रापि निपात्यते । श्रन्थेरिति । प्रपूर्वस्य हिमपूर्वस्य च घञि निपात्यते इति बोध्यम् । प्रायिकमिति । सर्वात्मना संज्ञाग्रहणत्यागे कृतः कट इत्यत्र कारः कट इति स्यादिति भावः । भाष्ये त्ववभिधानमाश्रित्य-

परिमाणाख्यायां सर्वेभ्यः । (३-३-२०) घञ् । अजपोर्बाधनार्थमिदम् । एकस्तण्डुलनिचायः । तण्डुलानां निचायो राशिः परिच्छिद्यते । द्वौ शूर्पनिष्पावौ । शूर्पेण निष्पावौ । द्वौ कारौ । अत्र विक्षिप्यमाणो धान्यादिः परिच्छिद्यते । 'दारजारौ

---

परिमाणाख्यायाम् । घञिति । शेषपूरणम् । सर्वेभ्यो धातुभ्यः अकर्तरि कारके वाच्ये घञ् स्यात् प्रत्ययार्थस्य परिच्छेदे गम्ये इत्यर्थः । ननु 'अकर्तरि कारके–' इत्येव सिद्धे किमर्थमिदमित्यत आह अजपोरिति । 'एरच्' 'ॠदोरप्' इति वक्ष्यमाणयोर्बाधनार्थमित्यर्थः । 'अकर्तरि च' इति घञ् तु ताभ्यां विशेषविहिताभ्यां बाध्यते, सरूपत्वेन वाऽसरूपविधेरप्रवृत्तेरिति भावः । एकस्तण्डुलनिचाय इति । निष्कृष्य चीयते संचीक्रियते इति निचायः । कर्मकारके वाच्ये 'एरच्' इत्यस्यापवादो घञ् । तण्डुलनिचायशब्दे विग्रहं दर्शयति तण्डुलानाम् इति । निचायशब्दस्य विवरणं राशिरिति । परिच्छिद्यत इति तण्डुलावयवकसङ्घातात्मकोः राशिरेकत्वेन परिच्छिद्यते इत्यर्थः । द्वौ शूर्पनिष्पावाविति । निष्पूयते तुषापनयनेन शोध्यते इति निष्पावः तण्डुलादिराशिः । इति कर्मणि घञ् । अबपवादः । शूर्पेण निष्पावः शूर्पनिष्पावः । 'कर्तृकरणे कृता बहुलम्' समासः । द्वित्वं तु शूर्पद्वारा निष्पावेऽन्वेति । अतः शूर्पद्वित्वमार्थिकं न तु शाब्दमित्येकवचनं निर्बाधम् । तदाह शूर्पेणेत्यादि । द्वौ काराविति । कीर्यते विक्षिप्यते इति कारः । धान्यादिराशिः । कर्मणि घञ्, अबपवादः । अत्र विक्षिप्यमाण इति । न च धातोरित्यधिकारादेव धातुमात्रात्सिद्धे सर्वग्रहणं व्यर्थमिति शङ्क्यम् । प्रकृत्याश्रय एवापवादो बाध्यते न त्वर्थाश्रय इत्येतदर्थत्वात् । तेनेह न–एका तिलोच्छ्रितिः । उच्छ्रीयते ऊर्ध्वीक्रियते इत्युच्छ्रितिः, ऊर्ध्वं कृतो राशिः, कर्मणि स्त्रियां क्तिन् । स च अर्थाश्रयत्वात् प्रकृत्याश्रयत्वाभावाद् नानेन घञा बाध्यते । किन्तु 'एरच्' 'ॠदोरप्' इति प्रकृत्याश्रयावेव अजपौ बाध्येते इति

---

प्रत्याख्यातम् । परिमाणाख्यायाम् । सर्वेभ्यो धातुभ्यः । परिमाणं परिच्छित्तिः आख्यानमाख्या उक्तिः । परिच्छित्तेरुक्तौ सत्यामित्यर्थः । कस्य पुनः परिच्छित्तिरिति चेत्प्रत्ययार्थस्येत्युच्यते । आख्याग्रहणं रूढिनिरासार्थम्, तेन परिमाणग्रहणेन संख्यात्र गृह्यते । सर्वेभ्यः किम्, अन्यथा पुरस्तादपवादन्यायेनाचमेव घञ् बाधेत न त्वपम् । तण्डुलनिचाय इति । निचीयते राशीक्रियते इति निचायः । अत्र राश्येकत्वेन समुदायेनापरिच्छित्तिरर्थाद्गम्यते । 'एरच्' इत्यचि प्राप्ते घञ् । निष्पूयते शोध्यते तुषाद्यपनयनेन यस्तण्डुलादिः स निष्पावः । 'ॠदोरप्' इत्यपि प्राप्ते घञ् । शूर्पेणेति करणे तृतीयान्तस्य 'कर्तृकरणे कृता बहुलम्' इति समासः । अत्र शूर्पसंख्यया तण्डुलादेरपि परिच्छित्तिः । शूर्पद्वित्वं तु आर्थिकं न तु शाब्दम्, निष्पावगतद्वित्वं तु शाब्दम् । यद्यप्यत्र 'निरभ्योः पूल्वोः' इति घञ् लभ्यते तथापि सर्वग्रहणबलादनेनापि भवितुमर्हतीति भावः । अप्रत्ययस्य मुख्योदाहरणमाह द्वौ काराविति । कॄ विक्षेपे । कर्मणि घञ् शूर्पादिना विक्षिप्तो धान्यादिराशिः कारः । इह प्रकृत्याश्रय एवापवादो नत्वर्थाश्रयः । सर्वेभ्य इति पञ्चमीनिर्देशेन तथैवावगमात् । तेनाय प्रकृत्याश्रयो घञ् क्तिनोऽपवादो न भवति । एका तिलोच्छ्रितिः। उत्पूर्वकाच्छ्रयतेः कर्मणि भावे वा क्तिन् । ऊर्ध्वीकृतो राशी-

कर्तरि णिलुक्च' (वा० २१८२)। दारयन्तीति दाराः। 'जरयतीति जारः—'उपपतिः। ३१९१ इङश्च। (३-३-२१) घञ्। अचोऽपवादः। उपेत्यास्मादधीयते उपाध्यायः। 'अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष्' (वा० २१८४)

---

भाष्ये स्पष्टम्। दारजाराविति। वार्तिकम्। दॄ विदारणे, जॄ वयोहानौ आभ्यां ण्यन्ताभ्यां कर्तरि घञ्। णिलोपं बाधित्वा णिलुक् चेत्यर्थः। दारयन्ति चित्तं विद्रावयन्तीति दाराः भार्या। 'दाराः पुंसि च भूम्न्येव' इत्यमरः। घञि णिलुक्। ण्याश्रयवृद्धौ निवृत्तायां घञाश्रया वृद्धिः, तदाह दारयन्तीति दारा इति। जरयति नाशयति कुलमिति जारः, जॄधातोर्ण्यन्ताद् घञ् णिलुक्। णिलोपे सति तु तस्य परनिमित्तकत्वेन 'अचः परस्मिन्—' इति स्थानिवत्त्वाद् घञाश्रया वृद्धिः न स्यात्। न च णिनिमित्तैव वृद्धिरस्त्विति वाच्यम्, 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वे 'मितां ह्रस्वः' इति णिनिमित्तकह्रस्वापत्तेः। णिलुकि तु तस्य परनिमित्तकत्वाभावेन स्थानिवत्त्वाभावान्न ह्रस्वप्रसङ्गः, तदाह जरयतीति जार इति। उपपतिरिति। 'जारस्तूपपतिः समौ' इत्यमरः। इङश्च। घञिति। शेषपूरणम्। इङ् अध्ययने, नित्यमधिपूर्वः। अस्मादकर्तरि कारके घञित्यर्थः। अकर्तरि चेति सिद्धेराह अचोऽपवाद इति। 'एरच्' इत्यस्यापवाद इत्यर्थः। उपेत्येति। समीपं प्राप्य यस्मादधीयते स उपाध्याय इत्यर्थः। अपादाने घञिति भावः। 'आख्यातोपयोगे' इत्यपादानत्वम्। अपादाने इति। अपादानकारके वाच्ये स्त्रीत्वे गम्ये इङो घञ उपसंख्यानमित्यर्थः। तदन्ताच्च वा ङीषिति। वार्तिकम्। 'अपादाने स्त्रियाम्' इति विहितघञन्ताद् इत्यर्थः। अत्र पठितमेव वार्तिकं स्त्रीप्रत्ययाधिकारे 'या तु स्वयमेव अध्यापिका तत्र वा ङीषित्युपन्यस्तम्' मूले। ननु 'अकर्तरि च—' इत्येव सिद्धे किमर्थं घञो विधानमिति चेन्न। 'घञनुक्रमणमजपोर्विषये' इति 'एरच्' 'ॠदोरप्' इत्यजपोरेव विषये 'अकर्तरि च—' इति घञ्विधिरिति भाष्यवचनात् स्त्रीत्वे गम्ये 'स्त्रियां क्तिन्' इति क्तिन्विषये घञि अप्राप्ते 'अपादाने स्त्रियाम्' इति

---

कृत इत्यर्थः। तदेतत्सूचयितुमुक्तम् अजपोरपवाद इति। तयोरपि प्रकृत्याश्रयत्वादपवादयोः समानविषयौचित्यात्। स्त्रियां क्तिन् त्वर्थाश्रय इति दिक्। दारजाराविति अकर्तरि कारके इत्यधिकाराद् 'ॠदोरप्' इत्यस्य घञपवादत्वाच्च कर्तरि घञर्थमिदं वचनम्। णिलुक्चेति। चाद् घञ्। लोपे हि सति घञाश्रया वृद्धिर्न स्याण्णिलोपस्य स्थानिवद्भावेन व्यवधानात्। न च णिन्निमित्तैव वृद्धिरस्त्विति वाच्यम्, जरशब्दे मितां ह्रस्वः' इति ह्रस्वापत्तेः। 'जनीजॄष्—' इति जॄधातोर्णौ मित्वात्। लुकि तु सति तस्य परनिमित्तत्वाभावेन 'क्विलुगुपधा—' इति क्वौ लुप्तस्य निषेधेन वा स्थानिवत्वाभावाज्जार इति रूपं सिध्यतीति भावः। एतेन दीर्यते यैस्ते दाराः, जीर्यतेऽनेनेति जाराः इत्यण्यन्ताभ्यामेव करणे घञस्तु, किमनेन वचनेनेति केषांचिदुक्तिः परास्ता। 'ॠदोरप्

---

१ 'जारयन्तीति जाराः' इत्येव क्वचित् पाठः। २ 'उपपतिः' इति क्वचिन्नास्ति।

उपाध्याया, उपाध्यायी । शॄ वायुवर्णनिवृतेषु (वा० २१८९) । 'शॄ' इत्यविभक्तिको निर्देशः । शारो वायुः, करणे घञ् । शारो वर्णः, चित्रीकरणमिह धात्वर्थः । निव्रियते आव्रियतेऽनेनेति निवृतमावरणम्, बाहुलकात्करणे क्तः । 'गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः', अकृतप्रावरण इत्यर्थः । ''प्रदक्षिणप्रसव्यगामिनां शाराणाम्' इति वार्तिककारप्रयोगादक्षेष्वपि शार इति भवति । ३१९२ उपसर्गे रुवः । (३—३—२२) घञ् । संरावः । उपसर्गे किम्—रवः । ३१९३ अभिनिसः स्तनः शब्दसंज्ञायाम् । (८—३—८६) अस्मात्स्तनः सस्य मूर्धन्यः । अभिनिष्टानो वर्णः । शब्दसंज्ञायां किम्—अभिनिःस्तनति मृदङ्गः । ३१९४ समि युद्रुदुवः । (३—३—२३) संयूयते मिश्रीक्रियते गुडादिभिरिति संयावः पिष्टविकारोऽपूपविशेषः । संद्रावः । संदावः । ३१९५ श्रिणीभुवोऽनुपसर्गे । (३—३—२४) श्रायः । नायः । भावः । अनुपसर्गे किम्—प्रश्रयः । प्रणयः । प्रभवः । कथं 'प्रभावो राज्ञः' इति—प्रकृष्टो भाव इति प्रादिसमासः । कथं 'राज्ञो नय' इति—बाहुलकात् । ३१९६ वौ क्षुश्रुवः । (३—३—२५) विक्षावः । विश्रावः । वौ किम्—क्षवः । श्रवः ।

---

घञ्वचनात् । उपाध्यायेति । उपेत्य अस्याः सकाशादधीयते इत्यर्थः । शॄवा-य्विति । वार्तिकम् । अविभक्तिक इति । लुप्तपञ्चमीक इत्यर्थः । वायौ वर्णे निवृते च कर्तरि शॄधातोर्घञित्यर्थः । अवोऽपवादः । शारो वायुरिति । शीर्यन्ते पर्णफलादीनि यैरिति विग्रहः, तदाह करणे घञिति । चित्रीकरण-मिति । शीर्यन्ते चित्रीक्रियन्ते पटादयः अनेनेति भावः । गौरिवेति । भाष्यस्थं श्लोकार्धम् । नीशार इत्यत्र 'उपसर्गस्य घञि' इति दीर्घः । अक्षे शारशब्दं साध-यति प्रदक्षिणेति । वार्तिककारप्रयोगादिति । पञ्चमस्य द्वितीये 'अनुपद-सर्वान्नायानयम्' इति सूत्रभाष्ये स्थितमिदम् । उपसर्गे रुवः । घञिति शेषः । उपसर्गे उपपदे रुधातोर्घञित्यर्थः । अबपवादः । समि युद्रुदुवः । समित्युपसर्गे उपपदे यु द्रु दु एभ्यो घञित्यर्थः, अबपवादः । श्रिणी । उपसर्गे असति, श्रि, नी, भू, एभ्यो घञित्यर्थः, अजपोरपवादः । बाहुलकादिति । 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणादित्यर्थः । वौ क्षुश्रुवः । वि इत्युपसर्गे उपपदे क्षु, श्रु, धात्वोर्घ-

---

इत्यपवादविषये उत्सर्गस्य घञो दुर्लभत्वात् । स्त्र्यधिकारादूर्ध्वं वासरूपविधेरनङ्गी-कारादपवादोऽप्यच् करणाधिकरणयोरिति ल्युटा बाधादिह दुर्लभ इत्यन्यदेतत् । उपेत्येति । गुरुसमीपमेत्येत्यर्थः । अपादान इति । पुरस्तादपवादन्यायेन इङश्चे-त्यस्याच एवापवादत्वात्स्त्रियां तु क्तिन् स्यादिति तद्बाधनायायमारम्भः । घञनुक्रमण-मजपोर्विषय इति वचनात्स्त्रियां घञ् न स्यादिति स्त्रियां ग्रहणम् । उपाध्यायेति । या स्वयमध्यापयति तस्यामिदं रूपद्वयम् । पुंयोगे तु ङीषेव । आनुगागमश्च पाक्षिक इत्युक्तम् । करणे क्त इति । वृञ् वरण इत्यस्मादित्यर्थः । नीशार इति । 'उपस-



---

१ अयं पाठो बहुत्र नावलोक्यते ।

३१९७ अवोदोर्नियः । (३—३—२६) अवनायोऽधोनयनम् । उन्नायः ऊर्ध्वनयनम् । कथम् 'उन्नयः उत्प्रेक्षा' इति—बाहुलकात् । ३१९८ प्रे द्रुस्तुस्रुवः । (३—३—२७) प्रद्रावः । प्रस्तावः । प्रस्रावः । प्रे इति किम्—द्रवः । स्तवः । स्रवः । ३१९९ निरभ्योः पूल्वोः । (३—३—२८) निष्पूयते शूर्पादिभिरिति निष्पावो धान्यविशेषः । अभिलावः । निरभ्योः किम्—पवः । लवः । ३२०० उन्न्योर्ग्रः । (३—३—२९) उद्गारः । निगारः । उन्न्योः किम्—गरः । ३२०१ कॄ धान्ये । (३-३-३०) कॄ इत्यस्माद्धान्यविषयकादुन्न्योर्घञ्स्यात् [ उत्कारो निकारो धान्यस्य, विक्षेप इत्यर्थः । धान्ये किम्-भिक्षोत्करः । पुष्पनिकरः । ३२०२ यज्ञे समि स्तुवः । (३-३-३१) समेत्य स्तुवन्ति यस्मिन्देशे छन्दोगाः, स देशः संस्तावः । यज्ञे किम्-संस्तवः परिचयः । ३२०३ प्रे स्त्रोऽयज्ञे । (३-३-३२) अयज्ञे इति छेदः । यज्ञे इति प्रकृतत्वात् । प्रस्तारः । अयज्ञे किम्—बर्हिषः प्रस्तरो मुष्टिविशेषः । ३२०४ प्रथने वावशब्दे । (३-३-३३) विपूर्वात्स्तृणातेर्घञ्स्यादशब्दविषये प्रथने । पटस्य विस्तारः । प्रथने किम्-तृणविस्तरः । अशब्दे किम्—ग्रन्थविस्तरः । ३२०५ छन्दोनाम्नि च । (३-३-३४) स्त्र इत्यनुवर्तते । विष्टारपङ्क्तिश्छन्दः । विस्तीर्यन्तेऽस्मिन्नक्षराणीत्यधिकरणे घञ् । ततः कर्मधारयः । ३२०६ छन्दोनाम्नि च । (८-३-९४) विपूर्वस्य स्तृणातेर्घञन्तस्य सस्य षत्वं स्याच्छन्दोनाम्नि । इति षत्वम । ३२०७ उदि

---

ञित्यर्थः । अवपवादः । अवोदोर्नियः । अव, उत्, अनयोरुपपदयोः नीधातोर्घञित्यर्थः । अजपवादः । उन्नय इत्यस्य विवरणम् उत्प्रेक्षेति । प्रे द्रुस्तुस्रुवः । प्र इत्युपपदे, द्रु, स्तु, स्रु, एभ्यो घञित्यर्थः । अवपवादः । निरभ्योः । निर्, अभि, अनयोरुपपदयोर्घञित्यर्थः । अवपवादः उन्न्योर्ग्रः । उत्, नि, इत्युपपदयोर्घञित्यर्थः, अवपवादः । कॄ धान्ये । कॄ इति लुप्तपञ्चमीकम्, तदाह कॄ इत्यस्मादिति । यज्ञे समि स्तुवः । समित्युपपदे स्तुधातोर्घञ् स्याद् यज्ञविषयं प्रयोग इत्यर्थः । अधिकरणे ल्युटोऽपवादः । संस्तव इत्यस्य विवरणम् परिचय इति । प्रे स्त्रोऽयज्ञे । प्रकृतत्वादिति । यज्ञे इति तु च्छेदो न भवति । पूर्वसूत्राद्यज्ञग्रहणानुवृत्त्यैव सिद्धेरित्यर्थः । प्र इत्युपपदेस्तृधातोर्घञित्यर्थः । प्रस्तार इति । इष्टकासंनिवेशविशेष इति याज्ञिकाः । प्रथने वावशब्दे । वौ अशब्दे इति च्छेदः, तदाह विपूर्वादिति । छन्दोनाम्नि च विपूर्वात् स्तृधातोर्घञ् स्याद अक्षरेयत्तात्मकच्छन्दसः संज्ञायामित्यर्थः । शब्दविषयत्वात् पूर्वेणाप्राप्ते वचनम् । कर्मधारय इति । विष्टरश्चासौ पङ्क्तिश्चेति विग्रह इति भावः । ननु 'सात्पदाद्योः' इति निषेधादादशसकाराभावाच्च कथमिह षत्वमित्यत आह छन्दोनाम्नीति । 'वृक्षासनयोर्विष्टरः'

---

गंस्य घञि—' इति दीर्घः । ननु 'प्रदक्षिणप्रसव्यगामिनां शाराणाम' इति कथं प्रयोगः । वायुवर्णेत्यर्थपरिगणनादिति चेत् । अत्राहुः—अतएव वार्तिकप्रयोगादक्षेष्वपि शृणातेर्घञ् । रव इति । 'ग्रहवृदृनिश्च—' इत्यप् । राज्ञो नय इति । णीञ् प्रापणे इत्यस्मादचो यत् । यज्ञे समि । अधिकरणे ल्युटोऽपवादोऽयं घञ् । छन्दो ।

ग्रहः। (३-३-३५) उद्ग्राहः। ३२०८ समि मुष्टौ। (३-३-३६) मल्लस्य संग्राहः। मुष्टौ किम्-द्रव्यस्य संग्रहः। ३२०९ परिन्योर्नीणोर्द्यूताभ्रेषयोः। (३-३-३७) परिपूर्वान्नयतेर्निपूर्वादिणश्च घञ्स्यात्क्रमेण द्यूते अभ्रेषे च विषये। परिणायेन शारान्हति। समन्तान्नयनेनेत्यर्थः। एषोऽत्र न्यायः। उचितमित्यर्थः। द्यूताभ्रेषयोः किम्-परिणयो विवाहः। न्ययो नाशः। ३२१० परावनुपात्यय इणः। (३-३-३८) क्रमप्राप्तस्यानतिपातोऽनुपात्ययः। तव पर्यायः। अनुपात्यये किम्-कालस्य पर्ययः, अतिपात इत्यर्थः। ३२११ व्युपयोः शेतेः पर्याये (३-३-३९) तव विशायः। तव राजोपशायः। पर्याये किम्-विशयः संशयः। उपशयः समीपशयनम्। ३२१२ हस्तादाने चेरस्तेये। (३-३-४०) हस्तादान इत्यनेन प्रत्यासत्तिरादेयस्य लक्ष्यते। पुष्पप्रचायः। हस्तादाने किम्-वृक्षाग्रस्थानां फलानां यष्ट्या प्रचयं करोति। अस्तेये किम्-पुष्पप्रचयः चौर्येण। ३२१३ निवासचिति-

---

इत्युत्तरं सूत्रम्। वेदप्रसिद्धसंज्ञायां विष्टरशब्दो निपात्यत इत्यर्थः। उदि ग्रहः। उदित्युपपदे ग्रहधातोः घञित्यर्थः। 'ग्रहवृदृनिश्चिगमश्च' इत्यप्प्रत्ययस्य वक्ष्यमाणस्यापवादः। समि मुष्टौ। समित्युपपदे ग्रहधातोर्घञ् स्याद् मुष्टिविषये धात्वर्थे गम्ये इत्यर्थः। मल्लस्य संग्राह इति। दृढग्रहणं मुष्टेरित्यर्थः। परिन्योः। द्यूते अभ्रेषे चेति। द्यूतविषये नयने अभ्रेषविषये गमने च। विद्यमानादित्यर्थः। अचोऽपवादः। शारान्। अक्षान्। एषोऽत्र न्याय इति। अभ्रेषेण वर्तनमित्यर्थः। उचितस्यार्थस्य अनपचारः अभ्रेषः, तदाह उचितमिति। परावनुपात्यय इणः। परौ उपपदे इण्धातोर्घञ् अनुपात्यये गम्ये इत्यर्थः। तव पर्याय इति। अनतिक्रमणमित्यर्थः। कालस्य पर्यय इति। अतिक्रम इत्यर्थः। तदाह अतिपात इति। व्युपयोः शेतेः। वि, उप, इत्युपपदयोः शीङ्धातो घञ् स्यात् पर्याये गम्ये इत्यर्थः। अजपवादः। पर्यायः प्राप्तावसरता। हस्तादाने। हस्तादाने गम्ये चिञ्धातोर्घञ्, न तु स्तेये इत्यर्थः। ननु वृक्षशिखरमात्रमारुह्य पुष्पावचयं करोतीत्यत्रातिव्याप्तिमाशङ्क्याह प्रत्यासत्तिरिति। आदेयस्य पुष्पादिद्रव्यस्य भूमिस्थितपुरुषीयहस्तग्रहणयोग्यावस्थितिरित्यर्थः। पुष्पप्रचयं चौर्येणेति। करोतीति शेषः। निवास। 'अकर्तरि च कारके' इति 'भाव' इति चानुवर्तन एव।

---

शब्दविषयत्वात्पूर्वेणाप्राप्ते वचनम्। केचित्तु प्रस्तारपङ्क्तिरित्यादिप्रयोगानुरोधेनात्र वाविति नानुवर्तयन्ति। उदि ग्रहः। भावादौ घञ् स्यात्। 'ग्रहवृद्-' इति प्राप्तस्यापोऽपवादः। परिन्योः। कक्षादिभिः क्रीडनं द्यूतम्। यथाप्राप्तकरणमभ्रेषः। परावनु-' अत्र व्याचख्युः द्विःपरिग्रहणमिह व्यर्थम्, सकृदेव कर्तुं शक्यम्। तथा हि-परौ नियो द्यूते, इणोनुपात्यये, नावभ्रेषे। इह इण इत्यनुवर्तन दिणोऽनुपात्यय इत्यत्र तु परावित्यनुवर्तनाच्चेष्टं सिध्यतीति भावः। ननु पूर्वसूत्रेऽनुपात्ययः पर्यायार्थकत्वेन व्याख्यातः। तथा च तदनुवृत्त्यैव सिद्धे पर्यायग्रहणमिह व्यर्थमिति चेदत्राहुः। पर्यायग्रहणं पुनर्विधानार्थं तेनात्राभिविधिविवक्षायां परमपि

